इतिअपरसंपुटस्यानुक्रमणिका
समाप्ता ॥



॥स्वस्ति॥श्रीगुरुगणेशाभ्यांनमः॥श्रीसरस्वत्यैनमः॥श्रीबोधायनाचार्येभ्योनमः॥वंदेबोधायनाचार्यंगणनाथंसरस्वतीम्
क्रियाज्ञानसुनिर्विघ्नवाक्यसंपत्तिहेतवे ॥१॥ नमोबोधायनायास्तुसर्वज्ञायमहात्मने ॥ शेषोखिलार्थविद्यस्यस्मृतः सर्वा
र्थबोधकः ॥ २ ॥ ज्योतिःशास्त्रंधर्मशास्त्रंकारिकांसूत्रमेवच ॥ प्रयोगांश्चसमालोक्यबोधायनहितायच ॥ ३ ॥ श्रीम
हालिंगपादाब्जसेवालब्धसुसंविदा ॥ परमेश्वरपुत्रेणवेंकटेशाभिधेनच ॥ ४ ॥ विद्यागुरुगणेशाख्यविदुषोनुग्रहेणच
॥ प्रयोगमालाक्रियतेकालनिर्णयपूर्वकं ॥ ५ ॥ नृसिंहदीक्षितगुरुपादाब्जद्वयमन्वहं ॥ वंदेनुग्रहतोयस्यप्रयोगःक्रियतेमु
दे ॥ ६ ॥ अथात्राचार्येणहुतादयएतेसप्तपाकयज्ञाइत्युक्तं॥ तत्रसूत्रं ॥ हुतःप्रहुतआहुतःशूलगवोबलिहरणं प्रत्यवरोह
णमष्टकाहोमइतिसप्तपाकयज्ञाःसगुँस्थाइति ॥ तत्रहुतोनामहोममात्रसाध्यः ॥ तेतुविवाहगर्भाधानपुंसवनसीमंतवि
ष्णुवलयः ॥ एषुहोमएव॥ ननुगर्भाधानेन्नप्राशनेचहविष्यान्नस्यप्राशनंविहितं कथं होममात्रमितिचेन्न ॥ हुतशेषंप्राश्ना
तिपक्वादुपादायप्राश्नातीत्यविधानात् ॥ तथाचसूत्रं ॥ सर्वत्रपक्वहोमंकुर्यादित्येतेनहोमदानप्राशनानिव्याख्यातानि
भवंति पक्वाज्जुहोतिपक्वाद्ददातिपक्वात्प्राश्नातीतिपाकयज्ञाहुती ॥ प्रहुतोनामहोमोबलिश्चयत्रतेप्रहुताः॥ यथा ॥ जा
तकर्मनामकर्णउपनिष्क्रमणान्नप्राशनकर्णवेधनचौलानीति ॥ एषुहोमोबलिश्चविहितौ ॥ आहुतोनामहोमबलिप्राश
नानिचयत्रविहितानितआहुताः॥ यथा ॥ उपनयनसमावर्तनायुष्यचरवः॥ शूलगवोनामप्रातिसंवत्सरमीशानमुद्दिश्य
क्रियमाणगवालंभनरूपः ॥ विरूपाक्षपुजाच॥ बलिहरणन्नामप्रतिदिनंवैश्वदेवानंतरंग्रहदेवताउद्दिश्याक्रियमाणबलिरू

पम्॥उत्सर्जनंसर्पबलिश्च ॥प्रत्यवरोहणन्नामतत्तद्तूद्भवधान्यैःस्थालीपाकश्रपणरूपम्॥अष्टकाहोमस्तुमार्गशिरपुष्यमा
घफाल्गुनमासेष्वपरपक्षाष्टमीषुक्रियमाणश्राद्धरूपः ॥मासिकादीनिचेति ॥ एवंहुतेप्युपाकर्मव्रतानिच ॥ प्रहुतेवास्तु
शमनमित्येतेसप्तपाकयज्ञाअवश्यन्नित्यवदनुष्ठेयाः ॥ अकृतेतु ॥ नैवनित्यानिलोपयेत् नाक्रियोब्राह्मणोभवेत् ॥ अन
ग्निरक्रियः ॥शूद्रइत्यादिप्रत्यवायश्रवणात् ॥ ननुयज्ञोनामबव्हृत्विग्द्रव्यायाससाध्यपशुपुरोडाशादिश्रपणरूपः ॥ तादृ
ग्विधेरत्राभावात्कथमेतेषांयज्ञत्वमितिचेदुच्यते ॥ हुतादिरासंवत्सरांतःसर्वोयज्ञोयोहियद्वेदस्वाध्याययज्ञःकर्मयज्ञोज
पयज्ञोमानसश्चेतिसूत्रेउक्तत्वात्॥पाकशब्देनाल्पत्वंश्रेष्ठत्वंचावगम्यते॥योस्मत्पाकतरइत्यल्पत्वं॥योमापाकेनमनसाच
रंतमितिप्रशस्तेनेतिगम्यते ॥सकलयज्ञानुष्ठानयोग्यश्रोत्रियत्वसंपादनाच्च ॥ अनेनैतेषांहुतादीनांयज्ञत्वमल्पायाससा
ध्यत्वंप्रशस्तत्वंचावगम्यते ॥ किंच॥ नामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनव्रतेषुचपक्वहोमस्याज्ञापक्वाःपाकयज्ञाः
सर्वत्रपक्वहोमंकुर्यादितिसूत्रेव्यतिरेकमुखेनापिपक्वानांपाकयज्ञत्वमुक्तं ॥ विष्णुभट्टोपि॥अग्न्याधेयंपुनरुत्तरकृत्वर्थंसतिद्र
व्येवश्यमनुष्ठेयमसतिद्रव्येत्वौपासनेनैवनित्यधृतेननित्यनैमित्तिकलोपाभावाद्दौर्ब्राह्मण्याभावः ॥हुताग्न्यादीनांत्वेकाग्नि
साध्यशांतिकपौष्टिकाद्युपलक्षणत्वात्पाकयज्ञैरेवकामाद्यवाप्तिरपिभवतिअग्नेरप्याधारोपलक्षणत्वात्॥बलिहरणस्यब्राह्म
णभोजनस्यापिपाकयज्ञत्वं॥अतएवोत्तरत्रतेषांप्रतिपादनमुपपन्नंभवति॥ तस्मादाचारःप्रमाणमितितस्मात्प्रशस्तत्वादा
चारःपित्रादिपरंपरायातंतत्समस्तंगृह्योक्तंकर्मप्रमाणमवश्यंसर्वैरप्यनुष्ठेयमिति ॥ अन्यत्रापिचरुपूर्वकोयज्ञःपाकयज्ञ

इतिव्याख्यानाच्च ॥ अनेनहुतादीनांजपहोमादीनांचपाकयज्ञत्वंसिद्धं ॥ अथबोधायनानामृतुसंवेशनगर्भाधानादिस्त्री पुरुषसंस्काराणांभिन्नतंत्रसमानतंत्रभेदेनचातीतानां एतेषां समानतंत्रेणकालातिपत्तिप्रायश्चित्तपूर्वकंसंस्काराणांचक्रमे णशास्त्रार्थनिर्णयपूर्वकंप्रयोगोलिख्यते ॥ तत्रादौसंस्कारनिरूपणं ॥ गृह्यसूत्रे ॥ जातस्यवैमनुष्यस्यद्वौसंस्कारावृ णभूतौभवतौ जातसंस्कारोमृतसंस्कारश्चेतिविज्ञायते ॥ जातसंस्कारेणेमंलोकमभिजयतिमृतसंस्कारेणामुंलोकमिति ॥ आश्वलायनोपि॥अतःपरंद्विजातीनांसंस्कृतिर्नियतोच्यते ॥ संस्काररहितायेतुतेषांजन्मनिरर्थकमिति ॥ नियतानि त्यनिरर्थकत्वंब्राह्मण्यमभिव्यक्तेः ॥ अतएवांगिराः ॥ चित्रकर्मयथानेकैरंगैरुन्मील्यतेशनैः ॥ ब्राह्मण्यमपितद्वत्स्या त्संस्कारैर्विधिपूर्वकैः ॥ स्वेस्वेगृह्येयथाप्रोक्तास्तथासंस्कृतयोखिलाः ॥ कर्तव्याभूति कामेननान्यथासिद्धिमृच्छति ॥पं चविंशतिसंस्कारैःसंस्कृतायेद्विजातयः ॥ तेपवित्राश्चयोग्याश्चश्राद्धादिषुसुयंत्रिताः ॥ अत्राद्यशब्दाद्यजनायाजनादेः परिग्रहाः ॥ गर्भाधानंपुंसवनंसीमंतोबलिरेवच ॥ जातकृत्यनामकर्मनिष्क्रमोन्नाशनंपरं ॥ चौलकर्मोपनयनंतद्व्रता नांचतुष्टयं ॥ स्नानोद्वाहौचाग्रयणमष्टकाचयथातथं ॥ उत्सर्गश्चाप्युपाकर्ममहायज्ञाश्चानित्यशइति ॥ गौतमसूत्रेपि ॥गर्भाधानंपुंसवनंसीमंतोन्नयनंजातकर्मनामकर्णान्नप्राशनंचौलोपनयनंचत्वारिवेदव्रतानिस्नानंसहधर्मचारिणीसंयोगः पंचानांयज्ञानामनुष्ठानमष्टकापार्वणश्राद्धमाग्रयणमिति॥पूर्वोक्तहुतादयः सप्तपाकसंस्थाअग्न्याधेयमग्निहोत्रंदर्शपूर्णमा सौचातुर्मास्याग्रयणेष्टिर्निरूढपशुबंधःसौत्रामणीतिसप्तहविर्यज्ञसंस्थाअग्निष्टोमोत्यग्निष्टोमउक्थ्यः षोळशीवाजपेयोति

तःस्त्रीणांसंस्कारस्त्वमंत्रकः ॥ विवाहस्तुसमंत्रकएव ॥ अत्रबोधायनपरिभाषा ॥ पुत्रायचदुहित्रेचसमानिब्राह्मणीक्रि
या॥मंत्रवद्गर्भआजन्मजन्माद्याआवृतास्त्रिया ॥ इति ॥ अमंत्रकाइतिशेषः॥योगीश्वरोपि ॥तूष्णीमेताःक्रियाःस्त्रीणांविवा
हस्तु समंत्रकइति ॥ मनुरपि ॥ अमंत्रकैव कार्येवं स्त्रीणामाव्रतशेषतः ॥ संस्कारार्थंशरीरस्ययथाकालंयथाक्रममि
ति ॥ चंद्रचूडोपि ॥ संस्कारार्थंक्रियाःस्त्रीणांतूष्णींकार्याद्विजातिभिः ॥व्यासोपि ॥ नवैताःकर्णवेधांतामंत्रवर्ज्याःक्रियाः
स्त्रियाइति ॥ विवाहोमंत्रतस्तस्याः शूद्रस्यामंत्रकादशेति ॥ अत्रनवानांमंत्रवर्ज्यत्वोक्तिर्जन्मोत्तरगौणकालक्रियमाण
गर्भाधानादिविषयाः ॥ यथाकालानुष्ठानेतुमंत्रवद्गर्भआजन्मेतिविष्णुवल्यंतस्यसमानतंत्रत्वोक्तेः ॥ तेषांकर्मणामेकैकस्य
द्वयोस्त्रयाणां वाप्रमादादिनालोपेउत्तरोत्तरकर्मकालेलुप्तानित्यकर्माणिकालातिपत्तिप्रायश्चित्तं कृत्वागर्भाधानादिचौलां
तंमंत्रवर्ज्यंकर्तव्यानीति ॥ इतिस्त्रीसंस्कारनिर्णयः ॥ यज्ञप्रायश्चित्तप्रश्ने ॥ येयेविशेषालघवोयत्रयत्रोपलक्षिताः ॥
तैःकर्मसंस्तरेविंद्यान्यायोपेतंयथाभवेत् ॥ स्वशास्त्रेविद्यमानेयःपरशास्त्रेणवर्त्तते ॥ भ्रूणहत्यासमंतस्यस्वशास्त्रमवम
न्यतः ॥ आर्षस्यचस्वशास्त्रस्यप्रदेशास्तद्गुणैःसमाः ॥ कर्मणांप्रविचारार्थमापत्सुचसमाप्नुयादिति ॥ ॥ इतिवें
कटेशकृतौप्रयोगमालायांसंस्कारनिर्णयः ॥ ७ ॥ अथाग्निनिर्णयः॥लोकेषुव्यवहार्येषुविज्ञेयोग्निःसलौकिकः ॥ गृहस्थै
र्धार्यतेयोसावौपासनइतिस्मृतः ॥ १ ॥ गर्भाधानेमारुतोग्निश्चंद्रमाः पुंसिकर्मणि ॥ सीमंतेमंगलोनामशोभनोवैष्णवे
बलौ ॥ २ ॥ प्रबलोजातकर्माग्निःपार्थिवोनामकर्मणि ॥ शिवोग्निरुपनिष्क्रांतौप्राशनेतुशुचिस्मृतः ॥ ३ ॥ वर्धमानः

कर्णवेधेसद्भ्योग्निश्चौलकर्मणि ॥ जातवेदास्तूपनयेव्रतदेशेसमुद्भवः ॥ ४ ॥ परिवर्तःसमावृत्तेविवाहेयोजकःस्मृतः ॥ चतुर्थ्यांजातवेदोग्निरग्निर्मूर्द्धातुपंचमे ॥ ५ ॥ वैश्वदेवेत्वावसक्थ्यःपचनःपाककर्मणि ॥ सद्भ्योग्निर्बहुकृत्येषुदहनस्त्वाभिचारके ॥ ६ ॥ पूर्णाहुतौमृडोनामशांतिकेवरदःस्मृतः ॥ प्रायश्चित्तेभवेद्विलिःपौष्टिकेबलवर्धनः ॥ ७ ॥ शुद्धिहोमेपावमानोवश्यार्थेकामदोनलः ॥ कुक्षौतुजाठरोवन्हिःक्रव्यादोमृतभक्षणे ॥ ८ ॥ दैविकेहव्यवाहोग्निःपैतृकेकव्यवाहनः ॥ शुक्रोह्यरण्यकस्याग्निर्व्रतवान्ब्रह्मचारिणः ॥ ९ ॥ आत्मज्योतिर्यतीनांतुरायस्पोषःसमृद्धिके ॥ जातउत्तपनीयोग्निःकुताश्चित्तस्तभांडतः ॥१०॥ संगात्तसकपालानामुत्थःसांतपनःस्मृतः ॥ इत्येवमग्नयःप्रोक्तास्तत्तत्कर्मसुयोजिताः ॥ ११ ॥ ग्रहाणांभास्करादीनांनवानांचनवाग्नयः ॥ प्रोक्तानुक्रमेणतान्सर्वान्तत्तस्मैविनियोजयेत् ॥ १२ ॥ कपिलःपिंगलश्चैवधूमकेतुश्चजाठरः ॥ शिखीचहाटकोनाममहातेजोहुताशनः ॥ १३ ॥ रौद्रोग्निरित्यथेतास्मिन्कर्मणिज्याःपृथक्पृथक् ॥ ब्रह्मातुगार्हपत्योग्निरन्वाहार्योमहेश्वरः ॥ १४ ॥ विष्णुस्त्वाहवनीयोग्निरग्निहोत्रेत्रयोग्नयः ॥ अविदित्वातुयोवन्हिंजुहुयादविचक्षणः ॥ १५ ॥ नतद्धुतंभवेदग्नौनहोताफलभाग्भवेत् ॥ इत्यग्निनिर्णयः॥ ७॥अथस्नानपवनमंत्राचमनमंत्रप्रोक्षणानांसर्वकर्मणामादौसाधारणत्वेनावश्यंकर्तव्यत्वात्तान्यादौलिख्यंते ॥ संग्रहे ॥ स्नानंचपवनंचैवमंत्राचमनमेवच ॥ मंत्रप्रोक्षणमेतानिकुर्यात्संस्कारआदितः ॥ इति ॥ गृह्यसूत्रे ॥ वेदकर्माणिप्रयोक्ष्यन्नादितएवतीर्थेस्नात्वोदेत्याहतंवासःपरिधायापआचम्यालंकृत्यैकविंगुंशतिदर्भपुंजीलैरात्मानंपवायित्वायस्यकुर्वन्भवातितं

पवयतीति ॥ चित्पतिस्त्वापुनातुवाक्पतिस्त्वापुनातुदेवस्त्वासवितापुनात्वित्येतैर्मंत्रैर्मुखनाभिगुल्फंचत्रिस्त्रिस्संमार्ष्टीति॥ अब्लिंगाभिस्त्रिःपिबेद्व्याहृतिभिस्त्रिःपरिमृजेदितिच ॥ इतिपवनविधिः ॥ अथमंत्रप्रोक्षणं ॥ कारिकायांदधिक्राव्ण इत्येकआपोहिष्ठादयस्त्रयः॥ यच्चिद्ध्यादित्रयोमंत्राहिरण्यादिचतुष्टयं ॥ पवमानानुवाकश्चसंज्ञिताःपावनाइति ॥तच्छेषसूत्रे॥ विष्णुभट्टोपि॥ सुरभिमत्याब्लिंगाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिश्चेति ॥ अथस्थान निर्णयः॥ कारिकायां ॥ द्वात्रिंशन्मार्जनाःप्रोक्ताःशिरःपूर्वादयःक्रमात् ॥ शिरोवक्त्रग्रीवबाहुवक्षोहृन्नाभिपार्श्वयुक् ॥ कटिगुह्योरुजान्वादिजंघपादांगुलीषुच ॥ सर्वांगेषुचतेकार्यामार्जनाःपापनाशनाः ॥ बाहुपार्श्वोरुजान्वंघ्रिष्वेकैकस्यैकमार्जनं ॥ शिरःपूर्वादिविज्ञेयौमार्जनौयुग्मयुग्मकौ ॥इतिद्वात्रिंशत् ॥ यथा॥ दधिक्राव्णः ॥१॥ आपोहिष्ठा॥३ ॥ यच्चिद्धिते ॥ ३ ॥ हिरण्यवर्णाः॥ ४ ॥ पवमानस्सुवर्जनः ॥ १७ ॥ व्याहृती ॥ ४ ॥ इतिद्वात्रिंशत् ॥ अथस्थानानि ॥ शिरसिद्वे ॥ २ ॥ मुखेद्वे ॥ ४ ॥ ग्रीवायांद्वे ॥ ६ ॥ बाह्वोरेकैकं ॥ ८ ॥ वक्षसिद्वे ॥ १० ॥ हृदिद्वे ॥ १२ ॥ नाभौद्वे ॥ १४ ॥ पार्श्वयोरेकैकं ॥ १६ ॥ कट्योर्द्वे ॥ १८ ॥ गुह्येद्वे ॥ २०॥ ऊर्वोरेकैकं ॥ २२ ॥ जानुनोरेकैकं ॥ ॥ २४ ॥ जंघयोरेकैकं ॥ २६ ॥ पादयोरेकैकं ॥ २८ ॥ पादांगुलीष्वेकैकं ॥ ३० ॥ सर्वांगेद्वे ॥ ३२ ॥ एवंद्वात्रिंशत्स्थानेषुउक्तमंत्रैःक्रमेणमार्जयेत् ॥इतिमंत्रप्रोक्षणं ॥ अथसर्वत्रकर्मादौविघ्नेश्वरपूजायाअवश्यकत्वात्तन्मंडललेखनप्रकारोलिख्यते ॥ यथा ॥ शक्रासुरानिलहुताशनवारुणेशभागाश्रितंतुविलिखेद्रसकोणमंतः ॥ पाशीशपावकसुदिश्युदितं

त्रिकोणंविघ्नार्चनेतुविहितंनवकोणचक्रं ॥कारिकायां ॥प्रादेशमात्रंचषडश्रयुक्तंबिंबंचबाह्येगुणवर्तुलाढ्यं॥ बाह्येचतुष्कोणयुतंलिखित्वामध्येयजेद्विघ्नपतिंहुतेषु ॥ अस्यार्थः ॥ आदौपूर्वादारभ्यनैर्ऋत्यवायव्यकोणपर्यंतंरेखांलिखित्वा पूर्वेणयोजयेत् एवंवरुणादारभ्येशानाग्नेयवरुणपर्यंतंरेखांलिखेत् ॥ एवंषट्कोणंसंपाद्यतदंतरवरुणेशाग्नेयवरुणपर्यंतं ॥ त्रिकोणंविलिख्य ॥ एवंनवकोणंसंपाद्यतद्बहिस्त्रिवृत्तंतद्बहिश्चतुष्कोणमितिमंडलंविलिख्यतन्मध्येगणपतिंयजेत् ॥ ॥ इतिविघ्नेश्वरपूजामंडलविधिः ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ अथगोचर्मलक्षणं ॥ गोमयेनगोचर्ममात्रंचतुरश्रंस्थंडिलंकृत्वेतिसूत्रं ॥ तल्लक्षणंतुकारिकायां ॥ अष्टांगुलीभिःप्रादेशंप्रादेशैकेनतत्पदं ॥ पदैर्द्वादशभिश्चैवगोचर्म ऋषिभिः स्मृतं ॥ अंगुष्ठेनकनिष्ठांतंयोजनीयंप्रमाणतः ॥ प्रादेशतालगोकर्णवितास्तिरितिकथ्यते ॥ ॥ ७ ॥ इति गोचर्मलक्षणं ॥ ॥ ७ ॥ अथपुण्याहमंडलं ॥ कारिकायां ॥ तिस्रस्तिस्रस्तुरेखाविलिखतुसमगाःपूर्वभागादिमध्ये मध्येयुग्युग्मरेखावृषशशिवदनावन्हिमाहेश्वराग्राः ॥ द्वेद्वेरेखेसमग्रेहुतवहशिवयोर्द्वेद्वरेखाःसमग्रामाहेशाग्न्योस्त्रिवृत्तंबहिरथविहितंपुण्यकालेष्टदिक्षु ॥अस्यार्थः ॥ समतलभूमावादौपूर्वभागेपूर्वापवर्गास्तिस्रोरेखाउत्तराग्राविलिखेत् ॥ततो दक्षिणभागेपूर्वाग्राउत्तरापवर्गास्तिस्रः ॥ पश्चिमेपूर्वापवर्गाउत्तराग्रास्तिस्रः ॥ उत्तरेपूर्वाग्राउत्तरापवर्गास्तिस्रोरेखालिखेत् ॥इति ॥वृषाइंद्रः शशीकुबेरः॥उत्तरादिगित्यर्थः॥अन्येप्रसिद्धाः॥एवंद्वादशरेखाविलिख्य ॥तन्मध्येपूर्वाग्रेद्वे ॥उत्तराग्रेद्वे ॥ ईशनाग्रेद्वे आग्नेयाग्रेद्वे ॥ एवमष्टौरेखाः ॥ तत्रैवमध्येदक्षिणतआरभ्यपूर्वाग्रेद्वे ॥ एवमुत्तरादारभ्यपूर्वाग्रे

द्धे॥पश्चिमादारभ्यदक्षिणाग्रेद्धे पुनःपश्चिमादारभ्योत्तराग्रेद्धे इतिमध्यकोष्ठचतुष्केष्वपिरेखाश्चलिखेत् ॥एवंकृतोष्टाविंशतिरेखाभवंति ॥ बहिरष्टदिक्षुपृथक्पृथग्वृत्तत्रयंलिखेत् ॥ कारिकायां ॥ अष्टाविंशतिरेखाभिःसंयुतंपुण्यमंडलं॥दस्रादितारकारूपंकारयेद्धस्तमात्रकं ॥ दस्रादिअश्विन्यादि ॥ रेखाणांत्वहादीनामश्वाद्याऋक्षदेवताः ॥ एकैकामंगुलिन्यस्येत्तत्द्रेखांतरालके ॥हस्तमात्रंसरत्निमात्रमित्यर्थः ॥प्रकोष्ठोविस्तृतकरोहस्तोमुष्ट्यातुबद्धयः॥सरत्निस्यादरत्निस्तुनिष्कनिष्ठेनमुष्टिनेत्यमरः॥ इतिपुण्याहमंडलं ॥ ७॥ अथनांदीनिर्णयः ॥ गृह्यसूत्रे ॥ नैकान्हापित्र्यंदैवंचकुर्वंतिप्रजाअस्यप्रमायुकाभवंतीति ॥ तस्मात्पितृभ्यः पूर्वेद्युः क्रियतइतिश्रुतेश्च ॥ पूर्वेद्युः सद्योवानांदीश्राद्धंकुर्यादितिविष्णुभट्टः ॥ ब्रह्मपुराणेपि ॥ वनस्थाद्याश्रमंगच्छन्पूर्वेद्युःसद्यएववेति ॥ गृह्यपरिशिष्टे ॥ महत्सुपूर्वेद्युस्तदहरल्पेष्विति ॥ गृह्यसुत्रेपि तेषुपूर्वेद्युरेवार्धिपूर्तेष्विति ॥ अत्रैवंव्यवस्था ॥ विवाहचौलोपनयनसोमादिषुपूर्वेद्युरेवनांदीश्राद्धंकुर्यात् ॥ गर्भाधानादितात्कालिकसंस्कारेषुपूर्वेद्युःसद्योवाकुर्यात् ॥ सद्योविधिरापद्विषयः ॥ निषेधस्यबलीयस्त्वा

१ त् ॥ अथनांदीकालः॥स्मृतौ॥ एकविंशत्यहर्यज्ञेविवाहेदशवासराः॥ त्रिषट्चौलोपनयनेनांदीश्राद्धंविधीयते॥विष्णुपुराणेस्मृत्यंतरेच नांदीश्राद्धमवश्यंकर्तव्यमित्युक्तं॥नांदीमुखात्पितॄनादौतर्पयेत्प्रयतोगृही ॥ नानिष्ट्वापितृयज्ञेनवैदिकं

१ किंचिदाचरेदिति ॥ अत्रक्रममाहप्रचेताः ॥ मातृश्राद्धंतुपूर्वंस्यात्पितॄणांतदनंतरं ॥ ततोमातामहानांचवृद्धौश्राद्धत्रयंस्मृतं ॥ इति ॥ स्मृत्यर्थसारे ॥ नांदीमुखायेपितरःषष्ठादुपरिसंस्थिताः ॥ लेपभागाश्चतुर्थाद्याःपित्राद्याःपिं

डभागिनः ॥ इति ॥ पारिजातेब्रह्मपुराणवचनं ॥ येस्युःपितामहादूर्ध्वंतेस्युर्नांदीमुखाइति ॥ प्रसन्नमुखसंज्ञास्तुमं गलीयायतस्तुते ॥ पितापितामहश्चैवतथैवप्रपितामहः ॥ त्रयोप्यश्रुमुखाह्येतेपितरः संप्रकीर्तिताः ॥ तेभ्यः पूर्वेत्र योयेतुतेतुनांदीमुखाः स्मृताइति ॥ तेपित्रादित्रिभ्यः पूर्वेपितरः प्रोष्ठपदपौर्णमासीनिमित्तश्राद्धदैवताएव ॥ नपुत्रज न्मादिकालिके ॥ इतितत्रैवमहालयप्रकरणेपठितत्वात् ॥ इहैतावत्सिद्धं ॥ यन्नामकरणचौलोपनयनविवाहादिषुयःक तासितत्कर्माणिनांदीमुखविशेषणवद्भ्योमनुष्यपितृभ्यः श्राद्धंकुर्यादिति ॥ अत्रमात्रादिमनुष्यपितॄन्नांदीमुखविशेषण कान्कृत्वार्चयेदितिहेमाद्रौप्रदर्शितं ॥ तथाचतत्रत्यवचनं ॥ ऊर्ध्ववक्त्रास्तुयेतत्रतेनांदीमुखसंज्ञिताइति ॥ एतेदिव्यपि तरः ॥ मात्रादयश्चमनुष्यपितरः प्राधान्येनोद्देश्याः ॥ नांदीमुखाश्चतदभेददृष्टिविधेयाउद्देश्यास्वरूपेतर्भावनीयाः ॥ अतोमात्रादिपित्रादिमातामहादित्रयेमनुष्यपितरएवप्रयोगकाले नांदीमुखशब्दविशेषणपूर्वकंप्रयोक्तव्याः ॥ अन्ये दिव्यपितरस्तुप्रोष्ठपदादिश्राद्धेग्राह्याः ॥ इतिनांदीदेवतानिर्णयः ॥ ॥ ७ ॥ ॥ अथनांदीश्राद्धेदैवेपित्र्येचद्वौद्वौप्र त्येकंनिमंत्रयेदित्युक्तमाचार्यैः ॥ द्वौद्वौनिमंत्र्याचैकैकेसंभोज्याब्राह्मणाःशुभाः ॥ निमंत्रयेतान्पूर्वंद्वौविश्वेदेवार्थमाहि ताः ॥ पितृभ्यस्तुयथाशक्तियुग्मान्गुणवतोद्विजान्इति ॥ ॥ ७ ॥ अथजीवत्पितृकविषये ॥ पारिजातेसायणीयवच नं ॥ नांदीश्राद्धंपिताकुर्यादाद्यपाणिग्रहेपुनः ॥ अतऊर्ध्वंप्रकुर्वीतस्वयमेवतुनांदिकामिति ॥ द्वितीयविवाहादौवरएव कुर्यादित्यर्थः ॥ आश्वलायनधर्मे ॥ नांदीश्राद्धंवरःकुर्यात्स्वास्तिवाचनपूर्वकं ॥ ग्रहप्रवेशमारभ्यापितर्यपिचजीव

ति ॥ सजीवत्पितृकोनांदीश्राद्धंचेत्कुरुतेद्विजः ॥ पितुश्चैवपितॄणांचप्रवदंतिमहर्षयइति ॥ कात्यायनस्तु ॥ स्वपि
तृभ्यः पितादद्यात्सुतसंस्कारकर्मसु ॥ एभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतः ॥ पिंडानोद्वाहनात्तेषांतस्याभा
वेतुतत्क्रमादिति ॥ अस्यार्थः ॥ सुतसंस्कारकर्मसुओद्वाहनांतविवाहपर्यंतंपितास्वपितृभ्यःपिंडंदद्यात् ॥ पिंडोपल
क्षितंवृद्धिश्राद्धंकुर्यात् ॥ तस्याभावेतुपितुरभावेतुसुतसंस्कारकर्मसु ॥ असंस्कृतास्तुसंस्कार्याभ्रातृभिःपूर्वसंस्कृतैः ॥
इत्युक्तत्वाज्ज्येष्ठभ्रात्रादयः स्वपितृभ्योदद्युरित्यर्थः ॥ एवमेवव्रतसमावर्तनादौपितातदभावेभ्रातातस्याप्यभावे स्वय
मेवस्वपितृभ्योदद्यादिति ॥ तदभावेतुतत्क्रमादित्यंशस्यार्थोहेमाद्रौदर्शितः ॥ पितुरभावेन्योयस्संस्कर्तासतत्क्रमात्त
त्पितरमारभ्ययःसंस्कार्यस्यपितृक्रमस्तेनक्रमेणदद्यात् ॥ नतुस्वकीयपितृभ्यः ॥ तथाचनिगमे ॥ तस्मात्पितृव्याचार्य
मातुलादयस्संस्कार्यःस्योपनेयादेरेवपितृभ्यःश्राध्धंदद्युर्नस्वपितृभ्यइति ॥ अत्रविशेषोगृह्यपरिशिष्टे ॥ जीवत्पिता
सुतसंस्कारेषुमातृमातामहयोःकुर्यात्तस्यांजीवत्यांमातामहस्यैवकुर्यादिति ॥ तथाचकात्यायनः ॥ स्वपितुःपितृकृत्ये
षुह्यधिकारोनविद्यते॥नजीवंतमतिक्रम्यकिंचिद्दद्यादितिश्रुतिः ॥अत्रकेचिदपवादोमैत्रायणीयपरिशिष्टे॥ उद्वाहेपुत्रजनने
पित्र्येष्ट्यांसौमिकेमखे ॥ तीर्थब्राह्मणआयातेषडेतेजीवतःपितुरिति ॥ पुत्रस्यषडेतेश्राद्धकालाइत्यर्थः ॥ पित्र्येष्ट्यांचा
तुर्मास्येषु ॥सौमिकेमखेसोमयागादौ ॥ पुरोडाशवत्पिंडदानेचएतत्साग्निकाभिप्रायं ॥ अतएवसुमंतुः ॥ नजीवतःपि
तुःकुर्यात्श्राद्धमग्निमृतेद्विजः ॥ एभ्यएवपितादद्यात्तेभ्यः कुर्वीतसाग्निकः॥ पितामहेप्येवमेवकुर्याज्जीवतिसाग्निकः ॥ सा

ग्निकोपिनकुर्वीतजीवतिप्रपितामहइति ॥ प्रपितामहग्रहणंपितृपितामहप्रपितामहप्रदर्शनार्थं ॥ अतएवविष्णुः ॥ पि
तरिपितामहेप्रपितामहेचजीवतिनैवदद्यादिति ॥ पितरिपितामहेचजीवतिकथमितिचेत्सएवाहविष्णुः ॥ पितरिजीव
तियत्श्राद्धंपिताएषांकुर्यात्तेषामेवकुर्यात् पितरिपितामहेचएषांपितामहइति ॥ यज्ञतंत्रसुधानिधावपि ॥ जीवत्पितृक
स्यनांदीश्राद्धेह्यनाधिकारएवप्रतीयतइत्युपक्रम्य ॥ उद्वाहेपुत्रजननेपित्र्येष्ट्यांसौमिकेमखे ॥ तीर्थब्राह्मणआयातेषडे
तेजीवतुःपितुरिति ॥ पुत्रस्येतिशेषः एतेश्राद्धकालाइत्यर्थः ॥ नजीवत्पितृकः कुर्याच्छ्राद्धमग्निमृतेद्विजः ॥ एभ्य
एवपितादद्यात्तेभ्यः कुर्वीतसाग्निकः ॥ साग्निकोपिनकुर्वीतयोजीवत्प्रपितामहइति ॥ पितृपितामहाभ्यांसहप्रपि
तामहेजीवतीत्यर्थः ॥ त्रिष्वपिजीवत्सुनांदीस्थानेतएवपूज्याः ॥ तेषामेकस्मिन्नप्यविद्यमाने ॥ एभ्यएवपितादद्यादि
त्यादिवचनस्यसावकाशात् ॥ यद्यपिपितृष्वपिजीवत्सुइदंवचनंप्रवर्तते ॥ साग्निकोपिनकुर्वीतयोजीवत्प्रपितामहइति
वचनेनबाध्यते॥ एवंमातरिजीवत्यांएभ्यएवपितादद्यादित्ययमेव॥ न्यायः ॥ मातामहेजीवतिपुत्रिकापुत्रस्यतुएभ्यएव
पितादद्यादित्यादिन्यायेनानुष्ठानमिति ॥ अनेनजीवत्पितृकस्यस्वद्वितीयविवाहपुत्रपुत्रीकाविवाहपुत्रजननचातुर्मास्या
ग्निष्टोमादियज्ञतीर्थयात्राश्रोत्रियागमनकालव्यतिरिक्तेषुकर्मसु नांदीश्राद्धअधिकारोनास्ति ॥ विवाहपुत्रजन्मनोरपि
जीवत्पितृमातृमातामहस्यनांदीश्राद्धप्रयोगेजनकस्यमातृपितृमातामहवर्गानुदिश्यश्राद्धंदद्यात्॥ पितरिजीवतिमातरिमा
तामहेप्यविद्यमानेआदौस्वमातृवर्गमुक्त्वाजनकस्यपितृवर्गंस्वमातामहवर्गंचोक्त्वाश्राद्धंदद्यात् ॥ पितरिमृतेमातरिमाता

महेचजीवतितदापितृवर्गएवोद्देश्यः॥एवंजीवत्पितृकः मातृवर्गमातामहवर्गयोरन्यतरस्मिन्विद्यमानेविद्यमानवर्गपरित्य
ज्यदद्यादिति॥ ॥विश्वपतिप्रयोगेतु॥जीवत्पितृकः पितृमात्रादिभ्योवृद्धिश्राद्धंकुर्यात्॥पितरिजीवतियेषांपिताकुर्यात्पितरि
पितामहेचएषांपितामहःपितरिपितामहेप्रपितामहेचनैवदद्यादिति॥जीवत्पितृकवज्जीवन्मातृकस्यनमातृपार्वणं॥जीवन्मा
तामहस्यनमातामहपार्वणं॥द्वारलोपादिति॥अनेनजीवत्पितृकस्यापिसर्वत्रनांदीश्राद्धाधिकारःप्रतीयते तथासतिविवाहे
पुत्रजननइतिपूर्वोक्तवचनाविरोधस्स्यात्॥ अतोजीवत्पितृकोपिपुत्रजननेविवाहेषुचातुर्मास्यसोमयागादिषुतीर्थेश्रोत्रिया
गमनेचैवमुक्तप्रकारेणावश्यंश्राद्धंकर्तव्यमिति गर्भाधानादिषुतुजीवत्पितृकस्यनैवाधिकारः॥तदातेप्रत्यक्षेणपूज्याइतिपा
रिजातेप्रपंचितं॥ किंच॥ मैत्रायणीयपरिशिष्टे॥ वृद्धौतीर्थेचसंन्यस्तेतातेचपतितेसति॥ एभ्यएवपितादद्यात्तेभ्योदद्यात्स्व
यंसुतइति ॥ अत्रवृद्धिशब्दग्रहणंविवाहेपुत्रजननइति ॥ पूर्वोक्तस्थलेषुक्रियमाणवृद्धिश्राद्धपरं ॥ इतिजीवत्पितृकनांदी
निर्णयः ॥ ७ ॥ अथविधवाकर्तृकनांदीश्राद्धविषये ॥ स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्य स्तथैवच ॥ विधवा
कारयेत् श्राद्धंयथाकालमतंद्रितेति ॥ अत्रवर्ज्यानि ॥ नस्वधानापसव्यंचनगोत्रंनचरूपकं॥तिलस्थानेयवः कार्यःसू
त्रोक्तविधिरेवच ॥ सर्वत्रयज्ञोपवीत्येवपुष्पफलाक्षतमिश्रयवैस्तिलंकार्यं कुर्याद्दर्भस्थानेदूर्वाःप्रयोज्याः प्रदक्षिणमुपचार
इति ॥ नांदीश्राद्धांगपुण्याहवाचनमितिविष्णुभट्टः ॥ सायणाचार्यश्च ॥ दानमयूखे ॥ आदावंत्येचमध्येचकुर्याद्
ब्राह्मणवाचनमिति ॥ श्राद्धंतु त्रिविधं ॥ अन्नश्राद्धमामश्राद्धंहिरण्यश्राद्धमिति ॥ एषामन्यतमेनवा कुर्यात् ॥ वैश्वदे

वानंतरंनांदीश्राद्धंकुर्यादित्युक्तं ॥ संग्रहे ॥ वृद्धावादौक्षयेचांतेदर्शेमध्येमहालये ॥ आचांतेषुचकर्तव्यं वैश्वदेवंचतुर्विधमिति ॥ इतिनांदीनिर्णयः ॥ अथपुण्याहनिर्णयः ॥ गृह्यसूत्रे ॥ अथापरेद्युर्देवानामिति ॥ पूर्वेद्युर्नांदीश्राद्धंकृत्वा परेद्युः पुण्याहंकुर्यादित्यर्थः ॥ किंच ॥ नैकान्हापित्र्यंदैवंचकुर्वंतिप्रजाअस्यप्रमायुकाभवंतीति ॥ तस्मात्पितृभ्यःपूर्वेद्युः क्रियतइतिश्रुतेश्च ॥ अथब्राह्मणानन्नेनपरिविष्यपुण्याहगुँस्वस्तिऋद्धिमितिवाचयित्वेतिवचनात् अन्नेनामेन हिरण्येनवाब्राह्मणान्संपूज्यतैरेवपुण्याहंवाचयेदितिविष्णुभट्टः ॥ व्यासोपि ॥ संपूज्यगंधमाल्याद्यैर्ब्राह्मणान्स्वस्तिवाचयेत् ॥ धर्मकर्मणिमांगल्येसंग्रामेद्भुतदर्शनइति ॥ गृह्यपरिशिष्टे ॥ अथस्वस्तिवाचनमृद्धिपूर्तेष्विति ॥ ऋद्धिर्विवाहांताअपत्यसंस्काराः पूर्तंप्रतिष्ठोद्यापने ॥ तत्तत्कर्मणश्चाद्यंतयोः पुण्याहंकुर्यादिति ॥ आश्वलायनः ॥ वैदिके तांत्रिके चादौततः पुण्याहइष्यतइति ॥ शौनकोपि॥पुण्याहवाचनविधिंवक्ष्यामोथयथाविधिः ॥ प्रयोक्तृकर्मणामादावंतेचोदयसिद्धयइति ॥ पुण्याहकालस्तु ॥ त्रिंशद्घटिकात्मकंदिवाप्रमाणंनवधाविभज्य विंशतिकलाधिकघटिकात्रयात्मकनवभागेषुप्रथमतृतीयपंचमसप्तमनवमभागाःपुण्याहाः ॥ द्वितीयषष्ठभागौश्लीलौअनिंद्यावित्यर्थः ॥ चतुर्थाष्टमभागावश्लीलौनिंद्यावित्यर्थः ॥ पुण्याहवाचनंतुप्रयोगांतर्गतमितिकेचित् ॥ प्रयोगबहिर्भूतमितिबहवः॥ अत्राद्यपक्षे प्रधानकर्मसंकल्पंकृत्वा ॥ पुण्याहंवाचयेत् ॥ बहिर्भूतपक्षेपुण्याहानंतरं कर्मसंकल्पंकुर्यात् ॥ कारिकायां ततःपंचद्विजा अन्नैस्तर्पिता दर्भहस्तकाः ॥ चत्वारः प्राङ्मुखाःस्थाप्यास्तेषांदक्षिणतोपरः ॥ धारयन्नुदकुंभंतुसापिधानमुदङ्मुखः

॥ दक्षिणंबाहुमेतस्यस्वयंतिष्ठेत्स्पृशन्निव ॥ पुण्याहंवाचयेदन्यान्मुदकुंभंचधारकइति उक्तमुक्तंप्रतिब्रूयुः शांतिरस्त्वादि
ससकमिति ॥ गृह्यसूत्रेपिचत्वारः प्राङ्मुखाः स्थाप्याः ॥ प्राङ्मुखोपरउदकुंभंधारयंस्तस्यपुण्याहंवाचयिष्यन्नामगृण्हा
त्यसौप्रीयतामितिपुण्याहंवाचयिष्यन्ब्राह्मणान्संपूज्यारिक्तपाणयः प्राङ्मुखायुग्मास्तिष्ठंति॥तेषांदक्षिणतःप्राङ्मुखो
दङ्मुखोवापिहितमुदकुंभंधारयन्वाचयितातिष्ठत्यपरःकुंभःस्थंडिलेतिप्रति तस्यदक्षिणंबाहुमन्वितरास्तिष्ठतीति ॥ वि
ष्णुभट्टोपि॥ कुशान्दूर्वांधारयमाणाअरिक्तपाणयःप्राङ्मुखाश्चत्वारास्तिष्ठंतितेषांदक्षिणतउदङ्मुखःपिहितमुदकुंभंधारयि
त्वान्यास्तिष्ठतितस्यदक्षिणंबाहुमाश्रित्येतरोवरादिस्तिष्ठतीति ॥ इतिपुण्याहनिर्णयः ॥ ॥श्री॥ अथनांदीप्रयोगः
॥ कर्तापूर्वेद्युःप्रातःस्नानादिनित्यकर्मकृत्वावैश्वदेवंहुत्वागणपतिंसंपूज्यास्यनांदीसमाराधनकर्मणःपुण्याहंभवंतोब्रुवंतु ॥
अस्मैनांदीसमाराधनकर्मणेस्वस्तिभवंतोब्रुवंतु ॥ अस्यनांदीसमाराधनकर्मणःऋद्धिंभवंतोब्रुवंतु ॥ नांदीमुखाःपितरः
प्रीयंतामितिपुण्याहंवाचयित्वाप्रोक्षणांतंकृत्वा ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यममकुमारस्यश्वःकरिष्यमाणामु
कर्मांगतयाविहितंनांदीसमाराधनंहिरण्येनकरिष्ये ॥ रात्रौचेद्रात्रौकरिष्यमाणइति ॥ सद्यश्चेदद्यकरिष्यमाणइति
संकल्प्यविश्वेदेवार्थंचतुरोब्राह्मणान्द्वौवामात्रादिवर्गत्रयस्यषट्द्वौवायथाशक्तिब्राह्मणान्निमंत्र्य ॥ पूर्वाभिमुखानुपवेश्य
हस्तेगंधाक्षतपुष्पदूर्वांकुरान्गृहीत्वाब्राह्मणपादेषुनिनयति ॥ नांदीसत्यवसुसंज्ञिकाविश्वेदेवानांदीमुखाभूर्भुवःसुवरिदं
वःपाद्यंस्वाहानममेयंचवृद्धिः॥ नांदीमातृपितामहिप्रपितामह्योनांदीमुख्योभूर्भुवस्सुवरिदंवःपाद्यंस्वाहानममेयंचवृद्धिः॥

नांदीपितृपितामहप्रपितामहानांदीमुखाभूर्भुवस्सुवरिदंवःपाद्यंस्वाहानममेयंचवृद्धिः ॥ नांदीमातामहमातुःपिताम
हमातुःप्रपितामहानांदीमुखाभूर्भुवस्सुवरिदंवःपाद्यंस्वाहानममेयंचवृद्धिः ॥ नांदीसत्यवसुसंज्ञिकाविश्वेदेवाः नांदीमु
खाभूर्भुवस्सुवरिदंवोआसनगंधाद्युपचारकल्पनंस्वाहानममेयंचवृद्धिः ॥ नांदोमातृपितामहिप्रपितामह्योनांदीमु
ख्योभूर्भुवस्सुवरिदंवोआसनगंधाद्युपचारकल्पनंस्वाहानममेयंचवृद्धिः ॥ नांदीपितृपितामहप्रपितामहानांदीमुखा
भूर्भुवस्सुवरिदंवोआसनगंधाद्युपचारकल्पनंस्वाहानममेयंचवृद्धिः ॥ नांदीमातामह मातुः पितामहामातुः प्रपि
तामहा नांदीमुखा भूर्भुवस्सुवरिदंवो आसनगंधाद्युपचारकल्पनं स्वाहानममेयंचवृद्धिः ॥ नांदीसत्यवसुसं
ज्ञिकाविश्वेदेवानांदीमुखाभूर्भुवस्सुवरिदंवोयुग्मब्राम्हणभोजनपर्याप्तान्ननिष्क्रयभूतंकिंचिद्धिरण्यंस्वाहानममेयंचवृद्धि :
॥ नांदीमातृपितामहिप्रपितामह्योनांदीमुख्योभूर्भुवस्सुवरिदंवोयुग्मब्राम्हणभोजनपर्याप्तान्ननिष्क्रयभूतंकिंचिद्धिरण्यं
स्वाहानममेयंचवृद्धिः ॥ नांदीपितृपितामहप्रपितामहानांदीमु खाभूर्भुवस्सुवरिदंवोयुग्मब्राम्हणभोजनपर्याप्तान्न
निष्क्रयभूतंकिंचिद्धिरण्यंस्वाहानममेयंचवृद्धिः ॥ नांदीमातामहमातुः पितामहमातुःप्रपितामहा नांदीमुखा भूर्भुवस्सु
वरिदंवोयुग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयभूतंकिंचिद्धिरण्यंस्वाहानममेयंचवृद्धि : ॥ इडादेवहूर्मनुर्यज्ञनीर्बृहस्प
तिरुक्थामदानिशगुँसिषाद्विश्वेदेवास्सूक्तवाचः पृथिविमातर्मामाहिगुँसीर्मधुमनिष्येमधुजनिष्येमधुवक्ष्यामिमधुवदिष्या
मिमधुमतींदेवेभ्योवाचमुद्यासगुँशुश्रूषेण्यांमनुष्येभ्यस्तम्मादेवाअवंतुशोभायैपितरोनुमदंतु ॥ नांदीमुखाःपितरःप्रीयंता

मितियवाक्षतदूर्वायुक्तापोनिनीय ॥ कृतस्यकर्मणःसांगतासिद्ध्यर्थंद्राक्षामलकनिष्क्रयभूतंकिंचिद्धिरण्यंस्वाहानममेयंच
वृद्धिः ॥ इडामग्नेपुरुदगुंसगुँसनिंगोःशश्वत्तमगुँहवमानायसाध ॥ स्यान्नस्सूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे
॥ इडएहि अदितएहि सरस्वत्येहि शिवगुँशिवं इति ॥ तांबूलगंधाक्षतादियुक्तपात्रंहस्तेगृहीत्वा ॥ तदधास्त्रि
स्ताडयेदितिशिष्टाचारः ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं ॥ अनेननां
दीसमाराधनकर्मणाश्रीपरमेश्वरःप्रीयतां ॥ इतिनांदीश्राद्धप्रयोगः ॥ ७ ॥ आमश्राद्धपक्षे ॥ पूर्वोक्तप्रकारेणपाद्या
सनादिकंदत्वाभोजनचतुर्गुणपरिमिततंडूलान्ससोपस्करान्पात्रद्वयेनिधाय ॥ सव्याहृतिगायत्र्याप्रोक्ष्य ॥ नांदीसत्य
वसुसंज्ञकाविश्वेदेवाःनांदीमुखाःभूर्भुवस्सुवरिदंवोयुग्मब्राम्हणभोजनपर्याप्तमिदमामंस्वाहानममेयंचवृद्धिः ॥ पुनःपूर्व
वत्प्रोक्ष्यनांदीमातृपितामहीत्यादि युग्मब्राह्मणभोजनपर्याप्तमिदमामंस्वाहानममेयंचवृद्धिः एवंपित्रादिभ्यः मातामहा
दिभ्यश्चदद्यादिति॥इत्यामश्राद्धविधिः ॥ यस्मिन्दिनेनांदीश्राद्धकुर्यात्तस्यामेवरात्रौउदकशांतिप्रतिसरबंधौकुर्यात् ॥ ताव
ग्रेवक्ष्यते॥ अथस्नानपवनादिप्रयोगः॥ कारिकायां ॥ नांदीमुखंचपुण्याहंस्नानंपवनमाचमं ॥ मंत्रप्रोक्षणकंकुर्यात्कर्मादौ
षड्विधंग्रहीति॥ एतेषांकर्मादावावश्यकत्वादादौस्नानपवनादिप्रयोगोलिख्यते ॥ अथापरेद्युःकर्तासपत्नीकस्संस्कार्येण
सहप्रातर्मंगलस्नानादिनित्यकर्मकृत्वासनेप्राङ्मुखउपविश्याचम्य प्राणानायम्यदेशकालौसंकीर्त्यामुककर्मकर्तुंममश
रीरशुध्यर्थंस्नानपवनमंत्राचमनमंत्रप्रोक्षणानिकरिष्ये इतिसंकल्प्य॥ ॐ आपोहिष्ठामयोभुवः॥तानऊर्जेदधातन ॥ म

हेरणायचक्षसे ॥ ॐयोवःशिवतमोरसः ॥ तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ ॐतस्माअरंगमामवः ॥
यस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः॥इतित्रिरुक्त्वा ॥ अथैकविंशतिदर्भपुंजीलांत्रेधाविभज्यप्रथमभागंगृही
त्वा चित्पतिस्त्वापुनात्वित्यास्यारभ्यशिरोंतंपरिमृजेत् ॥ द्वितीयभागंगृहीत्वा वाक्पतिस्त्वापुन॥त्वितिनाभ्यारभ्या
स्यांतंपरिमृजेत् ॥ तृतीयभागंगृहीत्वा देवस्त्वासवितापुनात्वितिनाभ्यारभ्यगुल्फांतंपरिमृजेत् ॥ तान्दर्भानद्भिरभ्यु
क्ष्योदङ्नि रस्यापउपस्पृश्यमंत्राचमनंकुर्यात्॥ॐआपोहिष्ठा ⁂ चक्षसइतिप्रथमं॥ॐयोवःशिवत ⁂ मातर इतिद्वितीयं॥
ॐतस्मा ⁂ यथाचनइतितृतीयं ॥स्वाहेतिप्राश्यांगुष्ठमूलेनमुखंत्रिःपरिमृज्यसव्यंपाणिंपादौप्रोक्ष्यांगुष्ठानामिकाभ्यांचक्षु
षी॥अंगुष्ठतर्जनीभ्यांनासिके॥अंगुष्ठकनिष्ठिकाभ्यांश्रोत्रे॥अंगुष्ठमध्यमाभ्यांबाहुमूले ॥ अंगुष्ठेननाभिं॥पाणितलेनहृदयं
॥पंचभिःशिरइतिप्रत्यंकमुपस्पृश्यतूष्णींपुनर्द्विराचमेदितिमंत्राचमनं॥अथमंत्रप्रोक्षणं ॥ॐदधिक्राव्णोअकारिषंजिष्णोर
श्वस्यवाजिनः॥सुरभिनोमुखाकरत्प्रणआयूंषितारिषत्॥१॥आपोहिष्ठा ⁂ चक्षसे॥२इतिशिरसिद्वे॥योवःशि ⁂ जनयथा
चनः॥४॥इतिमुखेद्वे॥ॐयच्चिद्धितेविशोयथाप्रदेववरुणव्रतं॥मिनीमसिद्यविद्यवि॥५॥ॐयत्किंचेदंवरुणदैव्येजनेभिद्रोहंम
नुष्याश्चरामसि ॥ अचित्तीयत्तवधर्मायुयोपिममानस्तस्मादेनसोदेवरीरिषः॥६॥इतिग्रीवायांद्वे॥ॐकितवासोयद्रिरिपुर्न
दीवियद्वाघासत्यमुतयन्नविद्म ॥ सर्वाताविष्यशिथिरेवदेवाथातेस्यामवरुणप्रियासः ॥ ७ ॥ हिरण्यवर्णाःशुचयःपाव
कायासुजातःकश्यपोयास्विंद्रः ॥ अग्निंयागर्भंदधिरेविरूपास्तानआपःशंस्योनाभवंतु ॥ ८ ॥ इतिदक्षिणवामबाह्वोः

॥ ॐयासाग्ँुराजावरुणोयातिमध्येसत्यान्टतेअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्तानआपःशग्ँुस्योनाभवंतु
॥ ९ ॥ ॐयासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षेबहुधाभवंति ॥ याःपृथिवींपयसोंदंतिशुक्रास्तानआपःशग्ँुस्योना
भवंतु ॥ १० ॥ इतिवक्षसिद्वे ॥ ॐशिवेनमाचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥ सर्वांग्ँुअग्नींग्ँुरप्सुष
दोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥ ११ ॥ ॐपवमानस्सुवर्जनः ॥ पवित्रेणविचर्षणिः॥यःपोतासपुनातुमा ॥ १२ ॥इ
तिहृदयेद्वे ॥ पुनंतुमादेवजनाः ॥ पुनंतुमनवोधिया ॥ पुनंतुविश्वआयवः ॥ १३ ॥ ॐजातवेदःपवित्रवत् ॥ पवित्रेणपु
नाहिमा ॥ शुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतग्ँुरनु ॥ १४ ॥ इतिनाभौद्वे ॥ ॐयत्तेपवित्रमर्चिषि ॥ अग्नेविततमंतरा॥
ब्रम्हतेनपुनीमहे ॥ १५ ॥ ॐउभाभ्यांदेवसवितः ॥ पवित्रेणसवेनच ॥ इदंब्रम्हमुनीमहे ॥ १६ ॥ इतिपार्श्वयोर्द्वे ॥
ॐवैश्वदेवीपुनतीदेव्यागात् ॥यस्यैबव्हीस्तनुवोवीतपृष्ठाः ॥ तयामदंतःसधमाद्येषु ॥ वयग्ँुस्यामपतयोरयीणां॥१७॥
वैश्वानरोरश्मिभिर्मापुनातु॥ वातःप्राणेनेषिरोमयोभूः ॥ द्यावापृथिवीपयसापयोभिः॥ऋतावरीयज्ञियेमापुनीतां ॥१८॥
इतिकटयांद्वे ॥ बृहद्भिस्सवितस्तृभिः ॥ वर्षिष्ठैर्देवमन्वाभिः ॥ अग्ने दक्षैःपुनाहिमा॥१९॥ॐयेनदेवाअपुनत ॥ येनापो
दिव्यंकशः ॥ तेनदिव्येनब्रम्हणा॥इदंब्रम्हपुनीमहे ॥२०॥ इतिगुह्येद्वे ॥ ॐयःपावमानीरध्येति ॥ ऋषिभिस्संभृतग्ँुर
सं ॥ सर्वग्ँुसपूतमश्नाति ॥ स्वदितंमातरिश्वना ॥ २१ ॥ पावमानीर्योअध्येति ॥ ऋषिभिस्संभृतग्ँुरसं॥ तस्मैसरस्व
तीदुहे ॥ क्षीरग्ँुसर्पिर्मधूदकं ॥२२॥ इत्यूर्वोर्द्वे ॥ ॐपावमानीःस्वस्त्ययनीः॥सुदघाहिपयस्वतीः ॥ ऋषिभिस्संभतो

रसः ॥ ब्राह्मणेष्वमृतगुँहितं॥२३॥पावमानीर्दिशंतुनः॥इमंलोकमथोअमुं॥कामान्त्समर्धयंतुनः॥देवीर्देवैस्समाभृताः॥२४
इतिजानुनोर्द्वे ॥ॐपावमानीस्स्वस्त्ययनीः॥ सुदुघाहिघृतश्रुतः॥ ऋषिभिस्संभृतोरसः॥ब्राम्हणेष्वमृतगुँहितं ॥२५॥ये
नदेवाःपवित्रेण ॥ आत्मानंपुनतेसदा ॥ तेनसहस्रधारेण ॥ पावमान्यःपुनंतुमा ॥ २६ ॥ इतिजंघयोर्द्वे॥ ॐप्राजापत्यंप
वित्रं ॥ शतोद्यामगुँहिरण्मयं ॥ तेनब्रम्हविदोवयं ॥ पूतंब्रम्ह पुनीमहे॥२७॥इंद्रस्सुनीतीसहमापुनातु ॥ सोमःस्वस्त्यावरु
णःसमीच्या ॥ यमोराजाप्रमृणाभिःपुनातुमा ॥ जातवेदामूर्जयंत्यापुनातु ॥ २८॥ इतिपादयोर्द्वे॥ ॐभूः ॥ २९ ॥ ॐभु
वः ॥ ३० ॥ इतिपादांगुलीषुद्वे ॥ ओगुँसुवः ॥ ३१ ॥ ॐभूर्भुवस्सुवः॥३२॥इतिसर्वांगेद्वे ॥ इतिद्वात्रिंशन्मार्जनानिषोडश
स्थानेषुयुग्मयुग्मक्रमेणमार्जयेत् ॥ अन्यैश्चपवित्रमंत्रैरात्मानंप्रोक्षयेत्युक्तत्वात् ॥ शन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥
शंयोरभिस्त्रवंतुनः ॥ कयानश्चित्रआभुवदूतीसदावृधस्सखा ॥ कयाशचिष्ठयावृता ॥ कस्त्वासत्योमदानामगुँहिष्ठोमत्स
दंधसः ॥ दृढाचिदारुजेवसु ॥ अभीषुणस्सखीनामविताजरितृणांशतंभवास्यूतिभिः ॥ ॐनरत्समंदीधावतिधारासुतस्यां
धसः ॥ तरत्समंदीधावति ॥ उस्त्रावेदवसूनांमर्तस्यदेव्यवसः ॥ तरत्समंदीधावति ॥ ध्वस्त्रयोःपुरुषंत्योरा॥सहस्त्राणिच
दद्महे ॥ तरत्समंदीधावति ॥ आययोस्त्रिगुँशतंतनासहस्त्राणिचदद्महे ॥ तरत्समंदीधावति ॥४॥इतिमार्जयित्वा
अनेनस्नानपवनमंत्राचमनमंत्रप्रोक्षणकर्मणाश्रीपरमेश्वरःप्रीयतां॥ ७ ॥ अथपुण्याहप्रयोगः॥अथशुचौसमेदेशेगोमयेन
गोचर्ममात्रं[॥द्वादशपदपरिमितमित्यर्थः॥]चतुरश्रंस्थंडिलंकृत्वा॥श्वेतमृद्भिःपूर्वोक्तप्रकारेणाष्टाविंशतिरेखात्मकंपुण्याहमं

डलंकृत्वा॥तदुपरितंडुलैःस्थंडिलंकृत्वा कलशद्वयंप्रतिष्ठाप्यजलेनपूरयित्वा तदंतःपंचरत्नानिनिक्षिप्यतदुपरिपंचपल्लवा
न्निधाय नारिकेलफलेनापिधायतदुपरिकूर्चंनिधाय गंधाक्षतपुष्पादिभिरलंकृत्यतद्दक्षिणभागेपूर्वोक्तप्रकारेणगणपतिमं
डलंविलिख्यपूजयेत्॥अत्रकलशयोःस्थिरचरप्रकारउक्तः॥नारायणभट्टीये॥पुण्याहवाचनेचैवंयःकुर्यात्कलशार्चनं ॥दक्षि
णस्थस्थिरश्चैवउत्तरस्थश्चरस्तथा॥नचालयेद्दक्षिणस्थमुत्तरस्थंतुचालयेत्॥अन्यथाकर्महानिस्स्यादेषधर्मस्सनातनइति
अथकर्तांकृतमंगलस्नानोलंकृतशरीरोदर्भपाणिः स्वोत्तरच्छदेभद्रासनेप्राङ्मुखउपविश्यस्वदक्षिणभागेपत्नीतद्दक्षिणे
संस्कार्यःपुत्रःपुत्रीवाक्रमेणोपविश्य॥अत्रकारिका ॥ होतुश्चदक्षिणेभागेयजमानोनिषीदति॥तद्दक्षिणेचतत्पत्नीदक्षिणेत
त्सुतादय इति ॥मंडलस्यपश्चिमेभागेचत्वारोब्राह्मणाःदर्भपाणयस्थाप्यास्तद्दक्षिणेन्यःकलशंधारयंस्तिष्ठतितस्यदक्षिणं
बाहुमन्वारभ्यकर्तोदङ्मुखस्तिष्ठति कलशधारकोब्राह्मणान्पुण्याहंवाचयेत्॥ अथकर्ताद्विराचम्यप्राणानायम्यगणेशादी
न्प्रार्थयेत्॥यथा॥सुमुखश्चैकदंतश्चकपिलोगजकर्णकः॥लंबोदरश्चविकटोविघ्नराजोगणाधिपः॥१॥धूमकेतुर्गणाध्यक्षोभा
लचंद्रोगजाननः॥द्वादशैतानिनामानियःपठेच्छृणुयादपि ॥ विद्यारंभेविवाहेचप्रवेशेनिर्गमेतथा॥संग्रामेसर्वकार्येषुविघ्न
स्तस्यनजायते ॥ शुक्लांबरधरंविष्णुंशशिवर्णंचतुर्भुजं ॥ प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये ॥ अभीप्सितार्थसिध्यर्थं
पूजितोयस्सुरैरपि ॥ सर्वविघ्नच्छिदेतस्मैगणाधिपतयेनमः ॥ सर्वेषुकालेषुसमस्तदेशेष्वशेषकार्येषुतथैश्वरेश्वरः ॥ सर्वै
स्वरूपैर्भगवाननादिर्ममास्तमांगल्यभिवर्द्धयेद्धरिः ॥ ६ ॥ यत्रयोगेश्वरःकृष्णोयत्रपार्थोधनुर्धरः ॥ तत्रश्रीर्विजयो

भूतिर्ध्रुवानीतिर्मतिर्मम ॥ ७ ॥ अनन्याश्चिंतयंतोमांयेजनाःपर्युपासते ॥ तेषांनित्याभियुक्तानांयोगक्षेमंवहाम्यहं ॥
॥ ८ ॥ स्मृतेसकलकल्याणंभाजनंयत्रजायते ॥ पुरुषंतमजंनित्यंव्रजामिशरणंहरिं ॥ ९ ॥ सर्वेष्वारंभकार्येषुत्रयस्त्रिभु
वनेश्वराः ॥ देवादिशंतुनस्सिद्धिंब्रह्मेशानजनार्दनाः ॥ १० ॥ सर्वदासर्वकार्येषुनास्तितेषाममंगलं ॥येषांहृदिस्थोभग
वान्मंगलायतनंहरिः ॥ ११ ॥ मंगलंभगवान्विष्णुर्मंगलंमधुसूदनः ॥ मंगलंपुंडरीकाक्षोमंगलंगरुडध्वजः ॥ १२ ॥
सर्वमंगलदातारौपार्वतीपरमेश्वरौ ॥ गणेशस्कंदसंयुक्तौवंदेवांछितसिद्धये ॥ १३ ॥ यःशिवोनामरूपाभ्यांयादेवीस
र्वमंगला ॥ तयोस्संस्मरणात्पुंसांसर्वतोजयमंगलं ॥ १४ ॥ तदेवलग्नंसुदिनंतदेवताराबलंचंद्रबलंतदेव ॥ विद्याबलं
दैवबलंतदेवलक्ष्मीपतेतेंघ्रियुगंस्मरामि ॥ १५ ॥ लक्ष्मीनारायणाभ्यांनमः ॥ सीतारामाभ्यांनमः ॥ उमामहेश्वरा
भ्यांनमः ॥ वाणीहिरण्यगर्भाभ्यांनमः॥शचीपुरंदराभ्यांनमः ॥ अरुंधतीवसिष्ठाभ्यांनमः ॥ दुर्गायैनमः ॥ गणपतये
नमः॥क्षेत्रपालायनमः॥वास्तुपुरुषायनमः॥मातृभ्योनमः॥पितृभ्योनमःआचार्येभ्योनमः॥ग्रामाधिदेवताभ्योनमः॥ इष्ट
देवताभ्योनमः॥कुलदेवताभ्योनमः॥सर्वेभ्योदेवेभ्योनमः॥सर्वेभ्योब्राह्मणेभ्योनमः॥श्रीमद्भगवद्बोधायनाचार्येभ्योनमः ॥
सुमुहूर्तमस्त्वितिभवंतोब्रुवंतु ॥ सुमुहूर्तमस्त्वितिप्रतिवचनं ॥ ॐदेवींवाचमजनयंतदेवाः ॥ तांविश्वरूपाःपशवोवदं
ति ॥सानोमंद्रेषमूर्जंदुहाना ॥धेनुर्वागस्मानुपसुष्टुतैतु ॥ भागधेयेनैवैनंप्रणयति ॥ ब्राह्मणाआर्षेयउद्धरेत् ॥ब्राह्मणो
वैसर्वादेवताः ॥ सर्वाभिरेवैनंदेवताभिरुद्धरति ॥ सर्वेभ्योब्राह्मणेभ्योनमः ॥ इतिब्राह्मणान्नमस्कृत्यदेशकालौसंकीर्त्यए

वंगुणविशेषणविशिष्टायांशुभतिथौकरिष्यमाणस्यामुककर्मणोनिर्विघ्नेनपरिसमाप्त्यर्थंगणपतिपूजांकरिष्ये ॥ ॐ गण
नांत्वागणपतिगुँहवामहेकविंकवीनामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनः श्रृण्वन्नूतिभिस्सीदसादनं ॥
गणपतयेनमः ॥ ध्यानंसमर्पयामि ॥ दूर्वाक्षतांगृहीत्वा ॥ ॐ भूःगणपतिमावाहयामि ॥ ॐ भुवः गणपतिमावाह
यामि ॥ ॐ सुवः गणपतिमावाहयामि ॥ ॐ भूर्भुवस्सुवः गणपतिमावाहयामि ॥ गणपतयेनमः ॥ आसनंसमर्प
यामि॥गणपतयेनमः ॥ पाद्यंसमर्पयामि ॥ गणपतयेनमः ॥ अर्घ्यंसमर्पयामि ॥ गणपतयेनमः ॥ आचमनंसमर्पया
मि ॥ गणपतयेनमः ॥ स्नानंसमर्पयामि ॥ गणपतयेनमः ॥ पुनराचमनंसमर्पयामि॥गणपतयेनमः॥वस्त्रंसमर्पयामि॥
गणपतयेनमः ॥ उपवीतंसमर्पयामि ॥ गणपतयेनमः ॥ आभरणंसमर्पयामि ॥ गणपतयेनमः गंधान्समर्पयामि ॥
गणपतयेनमः ॥ अक्षतान्समर्पयामि ॥ गणपतयेनमः ॥ पुष्पाणिसमर्पयामि । गणपतयेनमः ॥ धूपंसमर्पयामि ॥
गणपतयेनमः ॥ दीपंसमर्पयामि॥गणपतयेनमः॥नैवेद्यंसमर्पयामि ॥गणपतयेनमः॥तांबूलंसमर्पयामी॥गणपतयेनमः॥
नीराजनंसमर्पयामि॥गणपतयेनमः॥मंत्रपुष्पंसमर्पयामि॥गणपतयेनमः॥प्रदक्षिणंसमर्पयामि॥गणपतयेनमः॥नमस्का
रंसमर्पयामि ॥ गणपतयेनमः ॥ सुवर्णपुष्पंसमर्पयामि ॥ वक्रतुंडमहाकायसूर्यकोटिसमप्रभ ॥ अविघ्नंकुरुमेदेवसर्व
कार्येषुसर्वदा॥गणपतयेनमः॥प्रार्थनांसमर्पयामि॥गणपतयेनमः सर्वोपचारपूजांसमर्पयामि॥हस्तेफलतांबूलानिगृहीत्वा
॥क्षेत्रस्यपतिनावयगुँहितेनेवजयामसि॥गामश्वंपोषयित्न्वासनोमृडातीदृशे ॥क्षेत्रस्यपतेमधुमंतमूर्मिंधेनुरिवपयोअस्मा

सुधुक्ष्व॥मधुश्चुतंघृतमिवसुपूतमृतस्यनःपतयोमृडयंतु ॥ क्षेत्रपालायनमः ॥ वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोअन
मीवोभवानः ॥यत्त्वेमहेप्रतितन्नोजुषस्वशन्नएधिद्विपदेशंचतुष्पदे ॥वास्तोष्पतेशग्मयासगुँसदातेसक्षीमहीरण्वयागातु
मत्या ॥ अवःक्षेमउतयोगेवरन्नोयूयंपातःस्वस्तिभिस्सदानः ॥ अमीवहवास्तोष्पतेविश्वारूपाण्याविशन् ॥ सखा
सुशेवएधिनः ॥ वास्तोष्पतयेनमः ॥इत्यक्षतपुंजेषुफलतांबूलानिनिक्षिप्य पुण्याहवाचनंकुर्यात् ॥ अथकर्ताप्राणानाय
म्यदेशकालौसंकीर्त्य एवंगुणविशेषणविशिष्टायांशुभतिथौकरिष्यमाणामुककर्मांगतयाविहितंशांत्यर्थंतुष्ट्यर्थंपुष्ट्यर्थंवृ
ध्यर्थंचब्राह्मणैस्सहस्वास्तिवाचनंकरिष्ये ॥ इतिसंकल्प्य॥ भूमिंस्पृशेत्॥ ॐमहीद्यौः पृथिवीचनइमंयज्ञंमिमिक्षतां ॥
॥ पिपृतान्नोभरीमभिः॥इतिभूमिं॥ॐओषधयस्संवदंतेसोमेनसहराज्ञा॥ यस्मैकरोतिब्राह्मणस्तगुँराजन्पारयामसि ॥
इतितंडुलान् ॥ ॐआजिघ्रकलशंमह्युरुधारापयस्वत्यात्वाविशंत्विंदव स्समुद्रमिवसिंधवस्सामासहस्रआभजप्रजया
पशुभिस्सहपुनर्माविशताद्रयि ॥ इतिकलशं ॥ तंतुंतन्वन्नजसोभानुमन्विहिज्योतिष्मतःपथोरक्षाधियाकृतान् ॥ अनु
ल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजनं ॥ इतितंतून् ॥ॐइमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमगुँसचतापरुष्णिया
॥ असिक्नियामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ इतिजलंपूरयेत् ॥ ॐस्योनापृथिविभवानृक्षरानिवेशनी ॥
यच्छानः शर्मसप्रथाः ॥ इतिमृत्तिकां॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं॥ईश्वरीगुँसर्वभूतानांतामिहोपह्वयेश्रियं॥
इतिगंधान्॥कांडात्कांडात्प्ररोहंतीपरुषःपरुषःपरि॥एवानोदूर्वेप्रतनुसहस्रेणशतेनच॥इतिदूर्वान् ॥ॐअश्वत्थेवोनिषदनं

पर्णेवोवसतिः कृता ॥ गोभाजइत्किलासथयत्सनवथपूरुषं॥इतिपल्लवान् ॥ॐया:फलिनीर्याअफलाअपुष्पायाश्चपुष्पि
णीः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वगुँहसः ॥ इतिफलं ॥ ॐबृहस्पतेजुषस्वनोहव्या॥नीविश्वदेव्या ॥ रास्वरत्ना
निदाशुषे ॥ इतिरत्नानि ॥ अग्नेरेतश्चंद्रगुँहिरण्यं अद्भ्यस्संभूतममृतंप्रजासु तत्संभरन्नुत्तरतोनिधाय अ
तिप्रयच्छंदुरितंतरेयं॥इतिहिरण्यं ॥ ॐयुवासुवासा:परिवीतआगात् ॥ सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवय
उन्नयंति ॥ स्वाधियोमनसादेवयंतः ॥ इतिवस्त्रं॥ॐपूर्णादर्विपरापतसुपूर्णापुनरापत॥ वस्नेवविक्रीणावहइषमूर्जगुँशत
क्रतो ॥ इतितंडुलपूर्णपात्रनिधानं ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेह
बोध्युरुशगुँसमानआयुःप्रमोषीः ॥ अस्मिन्कलशे वरुणायनमः॥वरुणमावाहयामि॥वरुणायनमः ॥ध्यायामि॥ध्यानंस
मर्पयामि ॥ आवाहनं ॥ आसनं ॥ पाद्यं ॥ अर्घ्यं ॥ आचमनं ॥ स्नानं ॥ पुनराचमनं ॥ वस्त्रं ॥ गंधान् ॥ अक्षता
न् ॥ पुष्पं ॥ धूपं ॥ दीपं ॥ नैवेद्यं ॥ तांबूलं ॥ नीराजनं ॥ मंत्रपुष्पं ॥ प्रदक्षिणां ॥ नमस्कारान् ॥ वरुणायनमः॥
सर्वोपचारपुजान्समर्पयामि ॥ कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः ॥ मूलेतत्रस्थितोब्रह्मामध्येमातृगणास्मृताः ॥
कुक्षौतुसागरास्सर्वेसप्तद्वीपावसुंधरा ॥ ऋग्वेदोथयजुर्वेदस्सामवेदोह्यथर्वणः ॥ अंगैश्चसहितास्सर्वेकलशंतुसमाश्रिताः
॥ अत्रगायत्रीसावित्रीशांतिःपुष्टिकरीतथा ॥ आयांतुममदेहस्यदुरितक्षयकारकाः ॥ सर्वेसमुद्रास्सरितस्तीर्थानिजल
दानदाः ॥ गंगेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिंधुकावेरिजलेस्मिन्सन्निधिंकुरु ॥ गंगाद्यास्सर्वतीर्थास्सान्नि

हितास्संतु ॥ मातृदेवोभव ॥ पितृदेवोभव॥ आचार्यदेवोभव ॥ अतिथिदेवोभव॥ इत्याशिषोगृहीत्वा॥ पूर्वस्थापिते
षुचतसृषुब्राह्मणहस्तेजलंददाति ॥ ॐआपइति ॥ शिवआपस्संत्वितिप्रतिवचनं ॥ गंधाः ॥ इतिगंधान्ददाति ॥ सुगं
धाइतिप्रतिवचनं ॥अक्षताःइत्यक्षतान्ददाति॥अक्षतंचारिष्टंचास्त्वितिप्रतिवचनं॥सुमनस इतिपुष्पाणिददाति॥सौमन
स्यमस्त्वितिप्रतिवचनं ॥ दक्षिणा इतिदक्षिणांददाति ॥ स्वस्तिदक्षिणाःपांतुबहुधेयंचास्तु पुण्यंवर्धतां ॥ इतिप्रतिव
चनं॥शांतिरस्तु॥यंकृत्वासर्ववेदयज्ञक्रियाकरणकर्मारंभाःशुभाःशोभनाः प्रवर्तंते तमहमोंकारमादिंकृत्वाभवद्भिरनुज्ञातःपुं
ण्याहंवाचयिष्ये ॥ वाच्यतामितिप्रतिवचनं ॥ ततःकलशधारकउत्तरकलशंगृहीत्वादक्षिणंजानुंभूमौनिधाय सव्यमुद्धृ
त्येडादेवहूरितिजपित्वा ओमित्युत्थायपत्न्यान्वारब्धयजमानदक्षिणबाहुनान्वारब्धः कलशधारकोमनस्समाधीयतामि
तिप्राङ्मुखस्थितान्ब्राह्मणान्वदति ॥ समाहितमनसस्मइतितेब्रूयुः ॥ प्रसीदंतुभवंतः ॥ प्रसन्नास्मइतिप्रतिवचनं
॥ शांतिरस्तु ॥ पुष्टिरस्तु ॥ तुष्टिरस्तु ॥ वृद्धिरस्तु ॥ अविघ्नमस्तु ॥आयुष्यमस्तु ॥ आरोग्यमस्तु ॥ शिवंकर्मास्तु ॥
कर्मसिद्धिरस्तु ॥ इष्टसंपदस्तु ॥ पुत्रसंपदस्तु ॥ सरस्वतीसंपदस्तु ॥ अहरहरभिवृद्धिरस्तु ॥ इतिकलशधारकः ॥
अस्त्वितिप्रतिवचनं ॥ ॐ यत्पुण्यंनक्षत्रं ॥ तद्बट्कुर्वीतोपव्युषं ॥ यदावैसूर्यंउदेति ॥ अथनक्षत्रंनैति ॥ यावतितत्र
सूर्योगच्छेत् ॥ यत्रजघन्यंपश्येत् ॥ तावतिकुर्वीतयत्कारीस्यात् ॥ पुण्याहएवकुरुते ॥ तानिवाएतानियमनक्षत्राणि ॥
॥ यान्येवदेवनक्षत्राणि ॥ तेषुकुर्वीतयत्कारीस्यात् ॥ पुण्याहएवकुरुते ॥ मह्यंसहकुटुंबिनेमहाजनान्नमस्कुर्वाणायआ

शीर्वचनमपेक्षमाणायकरिष्यमाणामुककर्मणः पुण्याहंभवंतोब्रुवंतु ॥ इतिमंद्रमध्यमतारकक्रमेणत्रिर्वदेत् ॥क्रमादुच्चोच्चै रित्यर्थः ॥ ॐपुण्याहमितिप्रतिवचनं त्रिः ॥ अग्रेप्येवं ॥ स्वस्तिनइंद्रोवृद्धश्रवाः ॥ स्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योअरिष्टनेमिः ॥ स्वस्तिनोबृहस्पतिर्दधातु ॥ अष्टौदेवावसवः सोम्यासः ॥ चतस्रोदेवीरजराःश्रविष्ठाः ॥ तेयज्ञंपांतुरजसःपरस्तात् ॥संवत्सरीणममृतगुँस्वस्ति ॥ मह्यंसहकुटुंबिनेमहाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणायकरिष्यमाणामुककर्मणेस्वस्तिभवंतोब्रुवंतु ॥ एवंत्रिः पूर्ववत् ॥ आयुष्मतेस्वस्तीतिप्रतिवचनं ॥ ॐऋद्ध्यास्महव्यैर्नमसोपसद्य ॥ मित्रंदेवंमित्रधेयन्नोअस्तु ॥ अनूराधान्हविषावर्धयंतः ॥ शतंजीवेमशरदस्सवीराः ॥ त्रीणित्रीणिवैदेवानामृद्धानि ॥ त्रीणिच्छंदाँगूँसित्रीणिसवनानि ॥ त्रयइमेलोकाः ॥ ऋद्ध्यामेवतद्वीर्यएषुलोकेषुप्रतितिष्ठति ॥ मह्यंसहकुटुंबिनेमहाजनान्नमस्कुर्वाणायाशीर्वचनमपेक्षमाणायकरिष्यमाणामुककर्मणःऋद्धिंभवंतोब्रुवंतु ॥ एवं त्रिः पूर्ववत् ॥ ऋध्यतामितिप्रतिवचनं त्रिः ॥ शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुआदित्यपुरोगास्सोमसाहितास्सर्वेग्रहाः प्रीयंतां ॥ यापक्वदेवतासाप्रीयतां ॥ अनाम्नातेषुप्रजापतिःप्रीयतां ॥ शकुननिमित्तस्वप्नाःशिवाभवंतु ॥ आयुषोभिवृद्धिरस्त्वायुषोभिवृद्धिरस्तु ॥ शिवगुँशिवमस्तु ॥ सर्वग्रहसगुँस्थित्यमस्तु ॥ सत्याएताआशिषस्संतु ॥ बहिर्देशेरिष्टनिरसनमस्तु ॥ इतिकिंचित्कलशोदकमीशान्येनिनीय ॥ यत्पापंतत्प्रतिहतमस्तु ॥यच्छ्रेयस्तदस्तु ॥ उत्तरेकर्मण्यविघ्नमस्तु ॥ उत्तरोत्तरमहरहराभिवृद्धिरस्तु ॥ उत्तरोत्तराःक्रियाःशुभास्संपद्यंतां ॥ तिथिकरण

मुहूर्तनक्षत्रादिग्देवताःप्रीयंतां ॥ अत्रशांतिरस्त्वित्यादिषुसर्वत्रकलशोदकंपात्रांतरेनिनयेदिति विश्वपतिप्रयोगेलिखितं तन्निर्मूलं ॥ सूत्रेच विष्णुभट्टिकारिकादावनूक्तत्वात् ॥ अथकलशजलमन्योन्यंसगुँस्राव्यतज्जलंपात्रांतरेनिनीयतत्र हिरण्यंनिधाय दर्भैर्दंपतीप्रोक्षयेयुः॥ तत्कालेपत्नीवामभागेउपविशति ॥अथप्रोक्षणमंत्रः॥कारिकायां ॥ आपोहिष्ठाद यस्तत्रयच्चिद्धित्रयवर्जिताः ॥ मार्जनाइतितेज्ञेयामंत्राद्यंतप्रकीर्तिताः ॥ तिस्रोव्याहृतयोज्ञेयाश्चतस्रोहोमकर्मणि ॥ प्रणवव्याहृतीपूर्वस्सावित्रीजपइष्यत इति ॥ सूत्रेतु ॥ आपोहिष्ठेतितिसृभिर्यच्चिद्धितइतितिसृभिर्हिरण्यवर्णाइतिचतसृभिःपवमानस्सुवर्जनइतिनानुवाकेनदेवस्यत्वेतितिसृभिश्चरणंपवित्रमितिद्वाभ्यांतच्छंयोरावृणीमहइतिमार्जयित्वा शंचमइतिगृहंप्रोक्ष्य शेषमप्सुनिनीयतीति ॥ देवस्यत्वासवितुःप्रसवे ॥ अश्विनोर्बाहुभ्यां॥ पूषणोहस्ताभ्यां॥ अश्विनोर्भैषज्येन ॥ तेजसेब्रह्मवर्चसायाभिषिंचामि ॥ देवस्यत्वा ⁑ हस्ताभ्यां ॥ सरस्वत्यैभैषिज्येन ॥ वीर्यायान्नाद्यायाभिषिंचामि ॥ देवस्यत्वा ⁑ हस्ताभ्यां ॥ इंद्रस्येंद्रियेण ॥ श्रियैयशसेबलायाभिषिंचामि ॥ चवाजिनं ॥ सोमगुँराजानंवरुणमग्निमन्वारभामहे ॥ आदित्यान्विष्णुगुँसूर्यंब्रह्माणंचबृहस्पतिं ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यागुँसरस्वत्यैवाचोयंतुर्यंत्रेणाग्नेस्त्वासांम्राज्येनाभिषिंचामींद्रस्यबृहस्पतेस्त्वासांम्राज्येनाभिषिंचामि ॥ चरणंपवित्रंवितितंपुराणंयेनपूतस्तरतिदुष्कृतानि ॥ तेनपवित्रेणशुद्धेनपूताअतिपाप्मानमरातिंतरेम॥ लोकस्यद्वारमर्चिमत्पवित्रं ॥ ज्योतिष्मद्भ्राजमानंमहस्वत् ॥ अमृतस्यधाराबहुधादोहमानं ॥ चरणंनोलोकेसुधितांदधातु ॥ तच्छंयोरावृणीमहे ॥

गातुंयज्ञाय ॥ गातुंयज्ञपतये ॥ दैवीस्वस्तिरस्तुनः ॥ स्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुभेषजं ॥ शन्नोअस्तुद्विपदेशं चतुष्पदे ॥ ॐ शांतिः शांतिः शांतिः॥इत्येतैर्मार्जयित्वाशंचमेमयश्चमइत्यनुवाकेनगृहंप्रोक्ष्य शेषोदकमप्सुनिनयेत् ॥उत्तिष्ठब्रह्मणस्पते ॥ देवयंतस्त्वेमहे ॥ उपप्रयंतुमरुतस्सुदानवः ॥ इंद्रप्राशूर्भवासचा ॥ यांतुदेवगणास्सर्वेपुजामादाय मत्कृतां ॥ इष्टकाम्यार्थसिद्ध्यर्थंपुनरागमनायच ॥ आवाहितदेवतायथास्थानमुद्वासयामि॥ अनेनपुण्याहकर्मणाश्रीपरमेश्वरःप्रीयतां ॥ इतिसर्वसाधारणपुण्याहप्रयोगः ॥ ॥ ७ ॥ ७ ॥ अथग्रहशांत्यादिशांतिकपौष्टिककर्मस्वाचार्यादीन्वरयेत् ॥ आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः॥ तथात्वंममयागेस्मिन्नाचार्योभवसुव्रत॥अस्मिन्कर्मण्याचार्यंत्वां वृणे ॥ इतिस्वदक्षिणपाणिनातस्यदक्षिणपाणिंस्पृष्ट्वावरयेत् ॥ यथाचतुर्मुखोब्रह्मास्वर्गेलोकेपितामहः ॥ तथात्वंममयागेस्मिन्ब्रह्माभवद्विजोत्तम ॥ अस्मिन्कर्मणिब्रह्माणंत्वांवृणे ॥ वृतोस्मीतिप्रतिवचनं ॥ एवमेवर्त्विजोवरयेत् ॥ इतिवेंकटेशकृतौप्रयोगमालायांनांदीमुखादिपुण्याहप्रयोगः ॥ ७ ॥ अथप्रधानसंकल्पः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थममुककर्मकरिष्ये ॥ इतिसंकल्प्य ॥ तत्तत्कर्मकुर्यात् इतिप्रधानसंकल्पः ॥ अथकुलदेवतास्थापनं ॥ विवाहोपनयनचौलादिशुभकर्मणामादौकर्तासपत्नीकतंडुलपूर्णपात्रंसफलंस्वगृहदेवतापुरतोनिधाय ॥ तत्रफलतांबूलदीपादिकंनिधायदेशकालौसंकीर्त्यामुककर्मांगत्वेनकुलदेवतास्थापनंकरिष्यइतिसंकल्प्य ॥ ॐभूर्भुवस्सुवरोम् इष्टदेवतामावाहयामीत्यावाह्य षोडशोपचारान्कृत्वा यज्ञेनयज्ञमितिपुष्पांजलीन्दत्वा नमस्कुर्यात्॥इतिकुलदेवता

स्थापन ॥१॥ ७ ॥ अथोदकशांतिप्रतिसरबंधसमानतंत्रप्रयोगः ॥ विवाहचौलोपनयनसमावर्त्तनाद्ध्याधेयादिकर्मस्वन्ये षुमंगलकार्येषुच यस्मिन्दिनेनांदीश्राद्धंकुर्यात्तस्यामेवरात्रौप्रदोषांते उदकशांतिमारभेत ॥ सद्यःकरणपक्षेनांदीश्राद्धंकृत्वा तदानीमेवोदकशांतिप्रतिसरबंधौकृत्वा ततः पवनादिप्रधानपुण्याहवाचनंकृत्वा विवाहादिकंकुर्यात् ॥ अथशुचौसमेदेशेगोमयेनगोचर्ममात्रंचतुरस्रंस्थंडिलंकृत्वा तन्मध्यतउद्धृत्यापस्पृष्ट्वाद्भिरवोक्ष्य युग्मान्ब्राह्मणान्सुप्रक्षालितपाणिपादानपआचम्य प्रतिदिशमासनेषूपवेश्याथकर्ता सपत्नीकस्संस्कार्येणसहप्रागग्रेषुदर्भेषूपविश्य दर्भान्धारयमाणः पवित्रपाणिर्द्विराचमनप्राणायामौकृत्वा देशकालौसंकीर्त्य ममसर्वामंगलनिवारणार्थंसमस्तमांगल्यप्राप्त्यर्थंचाद्यरात्रौश्वोवाकरिष्यमाणामुककर्मांगतयाविहितावुदकशांतिप्रतिसरबंधौसमानतंत्रेणकरिष्ये॥तदादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजांकरिष्ये ॥ इतिसंकल्प्य ॥ तत्कृत्वाअस्मिन्नुदकशांतिप्रतिसरबंधकर्मणिपूर्वस्यांदिशिऋत्विजंत्वामहंवृणे ॥ उदकशांतिप्रतिसरबंधसूक्तपठनार्थमितिवा ॥ एवमेवदक्षिणस्यांदिशि ॥ पश्चिमायांदिशि ॥ उत्तरस्यांदिशि ॥ ऋत्विजंत्वांवृणे ॥ इतिचतुरोष्टौवाब्राह्मणान्वृत्वा॥वृतोस्मीतिप्रतिवचनं॥ततोवृतेभ्यऋत्विग्भ्योनमइतिगंधाद्युपचारान्समर्पयामीत्यभ्यर्च्यारत्निमात्रंसमचतुरस्रंतंडुलैःस्थंडिलंकृत्वा प्रोक्ष्यसमुल्लिख्याद्भिरभ्युक्ष्य दूर्वाक्षतफलैरवकीर्य गंधोदकेनाभ्युक्ष्य पुष्पैरवकीर्य तेषुब्रह्मपात्रंसुधूपितंसूत्रवेष्टितंतदुत्तरतः प्रागग्रेषुदर्भेषुसादयित्वा दर्भैःप्रच्छाद्य कुंभमुत्तानंकृत्वा तूष्णींगुँसगुँस्कृताभिरद्भिस्त्रिःप्रोक्ष्य ब्रह्मजज्ञानमितिस्थंडिलेनिधाय तिरःपवित्रमपआनयन्जपति ॥ तत्सवितुर्वरेण्यमितितत्रयवा

क्षततंडुलानावपति॥ भूर्भुवस्सुवरित्यथदेवस्यत्वेत्यादिभिश्चतुर्दिक्षुपरिस्तीर्य दूर्वादर्भैःप्रच्छाद्याभिमृशति ॥शन्नोदेवीर
भिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः॥ इतितस्योत्तरतस्तंडुलपूर्णकांस्यपात्रे नवगुणयुतंनवसूत्रंगंधलिप्तंभस्म
युतंनिधाय ततस्सर्वेब्राह्मणाः कुंभमन्वारभ्यजपंति ॥ ॐभूर्भुवस्सुवरों ॥ ॐतत्सवितुर्वरेण्यं ॥ भर्गोदेवस्यधीमहि॥
धियोयोनःप्रचोदयात् ॥ ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ॐतत्सवितुर्वरेण्यंभर्गोदे
वस्यधीमहिधियोयोनःप्रचोदयात् ॥ इतिपच्छोर्द्धर्चशोनवानमुक्त्वावेदादीन्जपति ॥ॐअग्निमीळेपुरोहितंयज्ञस्यदेव
मृत्विजं ॥ होतारंरत्नधातमं ॥ ॐइषेत्वोर्जेत्वा॰॥॰यज्ञस्यघोषदसि॰॥॰शुंधध्वंदैव्यायकर्मणे॰॥॰इतित्रिरनुवाकान् ॥ अ
ग्नआयाहिवीतयेगृणानोहव्यदातये॥निहोतासत्सिबर्हिषि॥ॐशन्नोदेवी ॰॰॰स्रवंतुनः॥इतिजपित्वा॥कृणुष्वपाजःप्रसितिन्न
पृथ्वीमित्यारभ्य तिग्मायुधारक्षसेहंतवाउइत्यंतं ॥ इंद्रंवोविश्वतस्परीत्येतमनुवाकं॥यतइंद्रभयामहे॰॥॰स्वस्तिदाविशस्प
तिः॰॥॰महाँइंद्रोवज्रबाहुः॰॥॰सजोषाइंद्रसगणः॰॥॰ इतिचत्वारोमंत्राः ॥ येदेवाः पुरस्सदोग्निनेत्रारक्षोहणस्तेनःपांतुते
नोवंतुतेभ्योनमस्तेभ्यःस्वाहा॥येदेवादक्षिणसदोयमनेत्रारक्षोहणः॰॰॰स्वाहा॥ येदेवाःपश्चात्सदस्सवितृनेत्रारक्षोहणः॰॰॰
स्वाहा॥येदवाउत्तरसदोवरुणनेत्रारक्षोहणः ॰॰॰स्वाहा॥येदेवाउपरिषदोबृहस्पतिनेत्रारक्षोहणः॰॰॰स्वाहा॥५॥अग्निरायुष्मा
न्त्सवनस्पतिभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि॥सोमआयुष्मान्त्सदक्षिणाभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि ॥ ब्र
ह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेनत्वायुषायुष्मंतंकरोमि॥देवाआयुष्मन्तस्तेमृतेनायुष्मंतस्तेनत्वायुषायुष्मंतंकरोमि ॥ ४ ॥

यावामिंद्रावरुणायतव्यातनूस्तयेममगुँहसोमुंचतं ॥ यावामिंद्रावरुणासहस्यातनूस्तयेममगुँहसोमुंचतं ॥ यावामिंद्रावरुणारक्षस्यातनूस्तयेममगुँहसोमुंचतं ॥ यावामिंद्रावरुणातेजस्यातनूस्तयेममगुँहसोमुंचतं ॥ ४ ॥ योवामिंद्रावरुणावग्नौस्त्रामस्तंवामेतेनावयजे ॥ योवामिंद्रावरुणाद्विपात्सुपशुषुस्त्रामस्तंवामेतेनावयजे॥योवामिंद्रावरुणाचतुष्पात्सुस्त्रामस्तंवामेतेनावयजे ॥योवामिंद्रावरुणागोष्ठेषुस्त्रामस्तंवामेतेनावयजे ॥ योवामिंद्रावरुणागृहेषुस्त्रा मस्तंवामेतेनावयजे ॥ योवामिंद्रावरुणाप्सुस्त्रामस्तंवामेतेनावयजे॥योवामिंद्रावरुणौषधीषुस्त्रामस्तंवामेतेनावयजे ॥ योवामिंद्रावरुणावनस्पतिषुस्त्रामस्तंवामेतेनावयजे ॥८॥ अग्नेयशस्विन्नितिचतस्त्रः ॥ऋताषाडृतधामाग्निर्गंधर्वस्सइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥तस्यौषधयोप्सरसऊर्जोनामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥सगुँहितोविश्वसामासूर्योगंधर्वस्सइदं ॥ तस्यमरीचयोप्सरसआयुगोनामताइदं ॥ सुषुम्नस्सूर्यरश्मिश्चंद्रमागंधर्वस्सइदं ॥ तस्यनक्षत्राण्यप्सरसोबेकुरयोनामताइदं ॥ भुज्युस्सुपर्णोयज्ञोगंधर्वस्सइदं ॥ तस्यदक्षिणाअप्सरसस्तवानामताइदं ॥ ताभ्यःस्वाहेषिरोविश्वव्यचावातोगंधर्वस्सइदं ॥ तस्यापोप्सरसोमुदानामताइदं ॥ भुवनस्यपतेयस्यतउपरिगृहाइहच ॥ सनोरास्वाज्यानिगुँरायस्पोषगुँसुवीर्यगुँसंवत्सरीणागुँस्वतिगुँस्वाहा ॥परमेष्ठ्यधिपतिर्मृत्युर्गंधर्वस्सइदं ॥ तस्यविश्वमप्सरसोभुवोनामताइदं ॥ सुक्षितिस्सुभूतिर्भद्रकृत्सुवर्वान्पर्जन्योगंधर्वस्सइदं ॥ तस्यविद्युतोप्सरसोरुचोनामताइदं ॥ दूरेहेतिरमृडयोमृत्युर्गंधर्वस्सइदं ॥ तस्यप्रजाअप्सरसोभीरुगोनामताइदं ॥ चारुः कृपणकाशीकामोगंधर्वस्सइदं ॥ तस्याधयोप्सरसशोच

स्मिन्प्रथमजाऋतस्यइत्यत्रदेवींवाचमजनयंतदेवाः यद्वाग्वदंतीतिद्वौप्रतीकौ ॥ अनंतामंतादित्यादिनिदधातिदेवयु
मित्यंतं ॥ नतानशंति ॥ नताअर्वारेणुककाटइतिद्वौप्रतीकौ ॥ गावोभगोगावइत्यंतमनुवाकं ॥ अग्निर्नःपातु *॥*ऋध्या
स्महव्यैः *॥*अस्यानुवाकस्यांते ॥ निवेशनीसंगमनी ॥ यत्तेदेवाअदधुरितिद्वौ ॥ नवोनवोभवति ॥ यमादित्याइतिद्वौ
॥येविरूपेसमनसा*॥*उदुत्यंजातवेदसं*॥*चित्रंदेवानां*॥*अदितिर्नउरुष्यत्वदितिः*॥*महीमूषुमातरंसुव्रतानां*॥*इदंवि
ष्णुः*॥*प्रतद्विष्णुः*॥*अग्निर्मूर्द्धा*॥*भुवोयज्ञस्य*॥*अनुनोद्यानुमतिः*॥*अन्विदनुमतेत्वंमन्यासै *॥* हव्यवाहमभिमा
तिषाहं*॥*स्विष्टमग्ने *॥* इतिद्वादश ॥ अग्नयेस्वाहाकृत्तिकाभ्यःस्वाहेत्यादिप्रश्नसमाप्तिपर्यंतमुत्तमानुपहोमान् ॥
दधिक्राव्णः ॥ आपोहिष्ठेतितिस्रः ॥ यच्चिद्धितेविशइतितिस्रः ॥ हिरण्यवर्णाइतिचतस्रः ॥ पवमानस्सुवर्ज
नइत्यनुवाकं ॥ भूः भुवः सुवः ॥तच्छंयोरावृणीमहे *॥* ॥ ७ ॥ अथघृतसूक्तं॥योब्रह्माब्रह्मणउज्जभारप्राणैश्वरः
कृत्तिवासाःपिनाकी ॥ ईशानोदेवस्सनआयुर्दधातुतस्मैजुहोमिहविषाघृतेन ॥ १ ॥ विभ्राजमानस्सरिरस्य
मध्याद्रोचमानोघर्मरुचिर्यआगात् ॥ समृत्युपाशादपनुद्यघोरादिहायुषेणोघृतमत्तुदेवः ॥ २ ॥ ब्रह्मज्योतिर्ब्रह्म
पत्नीषुगर्भंयमादधात्पुरुरूपंजयंतं ॥ सुवर्णरंभग्रहमर्कमर्च्यंतमायुषेवर्धयामोघृतेन ॥ ३ ॥ श्रियंलक्ष्मीमोपला
मंबिकांगांषष्ठींचयामिंद्रसेनेत्युदाहुः ॥ तांविद्यांब्रह्मयोनिंसरूपामिहायुषेतर्पयामोघृतेन ॥ ४ ॥ दाक्षायण्यस्सर्वयो
न्यस्सुयोन्यस्सहस्रशोविश्वरूपाविरूपाः ॥ससूनवस्सपतयस्सयूथ्यादिहायुषेणोघृतमिदंजुषंतां ॥ ५ ॥ दिव्यागणाब

हुरूपाः पुराणाआयुच्छिदोनप्रमथ्नंतुवीरान् ॥तेभ्योजुहोमिबहुधाघृतेनमानःप्रजागुँरीरिषोमोतवीरान् ॥ ६ ॥ एकः पुरस्ताद्यइदंबभूवयतोबभूवुर्भुवनस्यगोपाः ॥ यमप्येतिभुवनगुँसांपरायेसनोहविर्घृतमिहायुषेत्तुदेवः ॥ ७ ॥ वसून्रुद्रानादित्यान्मरुतोथसाध्यान्नृभून्यक्षान्गंधर्वागुँश्चपितृगुँश्च॥विश्वान्भृगून्त्सर्पांश्चांगिरसोथसाध्यान्घृतगुँहुत्वास्वायुष्यामिहयामशश्वत् ॥ ८ ॥ इत्युदकशांतिप्रयोगः ॥ ७ ॥ अथप्रतिसरबंधः ॥ तमेवकुंभमन्वारभ्यव्याहृतिगायत्रीवेदादींश्चपूर्ववज्जपित्वा ॥ कृणुष्वपाजइत्यंतमनुवाकं ॥ अग्नेयशस्विन्नितिचतस्रः ॥ हिरण्यवर्णाःशुचयःपावकाः॥ पवमानस्सुवर्जनः ॥ इत्येतावनुवाकौ ॥ उदुत्तमंवरुणास्तभ्नाद्यांयत्किंचेदंकितवासःअवतेहेडस्तत्त्वायामीतिषड्वरुणसूक्तं ॥ परिणोरुद्रस्तुहिश्रुतंमीढुष्टमार्हन्बिभर्षित्वमग्नेरुद्रआवोराजानामितिषड्रुद्रसूक्तं॥ ब्रह्मजज्ञानामितिब्रह्मसूक्तं॥ विष्णोर्नुकंतदस्यप्रियंप्रतद्विष्णुः परोमात्रयाविचक्रमेत्रिर्देवइतिषड्विष्णुसूक्तं ॥ जातवेदसइतिपंचदुर्गासूक्तं ॥ हिरण्यवर्णामितिश्रीसूक्तंपंचदशर्चं ॥ विंदेयंपुरुषानहं॥ १५ ॥एतानिप्रातिसरसूक्तानि ॥ ॐनमोब्रह्मणइतित्रिरुक्त्वा॥ॐमित्युदकुंभमुत्थाप्य व्याहृतिभिः प्रोक्षत्यथदक्षिणांददाति पुरस्तादुपविष्टायहिरण्यंदक्षिणाःप्रतिपादयामि॥ दक्षिणतउपविष्टाय रजतंदक्षिणाःप्रतिपादयामि ॥ पश्चादुपविष्टाय कांस्यंदक्षिणाः प्रतिपादयामि ॥ उत्तरतउपविष्टाय वस्त्रंदक्षिणाः प्रतिपादयामि ॥सर्वत्रतत्तन्मूल्यंवा ॥ ततःप्रतिसरसूत्रमादायव्याहृतिभिःप्रोक्ष्य वासुकिंध्यात्वा त्र्यंबकंयजामहइतिभस्मनोर्ध्वांत्रिस्संमृज्य ॥ बृहत्सामक्षत्रभृद्वृद्धवृष्णियंत्रिष्टुभोजःशुभितमुग्रवीरं ॥ इन्द्रस्तोमेनपंचदशेनमध्यमिदं

वातेनसगरेणरक्ष॥इतिदक्षिणहस्तेबध्वा स्त्रीणांवामहस्ते॥अथभस्मगृहीत्वा योब्रह्माब्रह्मणइत्यष्टचैनरक्षांकृत्वाग्निरायुष्मा
नितिपंचभिःपर्यायैराशीर्भिरभिनंद्य ॥ अनेनोदकशांतिप्रतिसरबंधकर्मणाश्रीपरमेश्वरःप्रीयतां ॥ आवाहितदेवतायैपु
नःषोडशोपचारान्कृत्वादेवतामुद्वासयेत् ॥ अत्रोदकशांतौप्रणवव्याहृतिगायत्रीवेदादीन्मंत्रान्यथाक्रमंपठित्वा पुनःप्रति
सरांगत्वेनपृथगेवमंत्राः पठनीयाः ॥ अन्यथातयोर्न्यूनातिरिक्तदोषप्रसंगः ॥ समानतंत्रत्वंतु कलशसंकल्पऋत्विग्वर्ण
पूजादक्षिणादिषुचरितार्थत्वात् ॥ नतुप्रधानमंत्रेषु ॥ अथवैतावुदकशांतिप्रतिसरबंधौपृथक्कर्तव्यौ ॥ अथोदकशांतिक
र्तव्यकालः ॥ स्वजन्मत्रयेवाजन्मसप्तमाष्टमराशिषुवाग्रहणेवाग्रहोत्पातेवामनुष्याणांपशूनांवाभयकालेपुण्यनक्षत्रेवो
दकशांतिंकुर्यात् ॥ एवमेवज्वरगृहीतानांग्रहगृहीतानांभूतोपसृष्टानांमित्रसंबंधिज्ञातिबांधवानांराज्ञांराजपुरोहितानांबा
लवृद्धगर्भिणीकृशानांदीर्घरोगिणांहस्त्यश्वोष्ट्रगोमहिषीणांभृत्यानांगृहाणांचप्रोक्षतिमहत्स्वस्त्ययनंभवत्यपपुनर्मृत्युंजय
तीत्याहभगवान्बोधायनः ॥ ॥ ७ ॥ ॥ इतिप्रयोगमालायामुदकशांतिप्रतिसरबंधप्रयोगः ॥ ॥ ७ ॥
अथसर्वकर्मसधारणाग्निमुखप्रयोगः ॥ तत्रादौहोममंडलप्रकारः ॥ विश्वामित्रकारिकायां ॥ साम्यंशुभ्रंकोणयुक्तंप्रमा
णंरेखाढ्याढ्यंदिक्षुपत्रंविशुद्धं ॥ कुर्यादेतन्मंडलंसप्तचिन्हंचत्वारिंशत्साष्टसंख्यांगुलाढ्यं ॥ गोचर्मांतःषडंघ्रिंहिमकर
सदृशंमंडलंचाष्टकोणंरेखाभिस्तत्रयुक्तंतिसृभिरतिशुभंश्वेतमृद्भिर्नवकं ॥ दिक्ष्वश्वत्थाकृतिवैपरिलिखतुबुधःस्वर्णसुक्तं
यथावत्त्वान्योन्यंचाष्टकोणंसममितिविलिखेद्धोमकार्येष्वभीष्टं ॥ पूर्वभागेतथापूर्वदक्षिणेचतदुत्तरे ॥ पश्चिमेपूर्वभागेच

उत्तरेचतदुत्तरे ॥ इतिमंडललक्षणं ॥ ७॥ अथदर्भाः॥अथसर्वदर्विहोमानामष्टोत्तरशतंदर्भाः ॥हस्तपवित्रेद्वे॥आत्मासने द्वे ॥ परिस्तरणार्थंप्राक्षोड शदक्षिणतस्सप्तदश पश्चिमेष्टादश उत्तरेसप्तदश ॥ पात्राणांपंच ॥ [ पात्राच्छादनार्थमि त्यर्थः ]॥ब्रह्मासनेसप्तदश ॥ प्रणीतासनेद्वे ॥ उपरिष्टाद्वे ॥ आज्यपवित्रेद्वे ॥ अभिद्योतनेद्वे ॥ दर्भाग्रेद्वे ॥ पर्यग्नि करणेद्वे ॥ स्रुक्संमार्जनेद्वे ॥ इत्यष्टोत्तरशतं ॥ ॥ ७ ॥ अथापस्पर्शनस्थानानि ॥ सर्वत्रछेदनभेदनखनननिरस नविस्रंसनदाहनिर्ऋतिपितृराक्षसरौद्रात्माभिमर्शनेष्वपउपस्पृशेत् ॥ ॥ ७ ॥ अथपरिसमूहनं ॥ नृसिंहकारिका यां ॥ सजलेनकरेणत्रिरैशानींदिशमादितः ॥ प्रदक्षिणंतदाशांतंयथाग्नौनजलंपतेत् ॥ परितोमार्जयेत्तद्वदेतत्परिसमूह नं ॥ पुनःपुनर्गृहीत्वाथत्रिर्निषिंचेत्प्रदक्षिणं ॥अन्यत्रापि॥पाणिनासोदकेनाग्नेस्समंतात्परिमार्जनं ॥ तत्समूहनमित्युक्तं जयंतवचनंयथेति ॥ ७ ॥ अथपरिषेकादीनामंगुलीक्रमउक्तः ॥ सिंगाभट्टीये ॥ अष्टमेनवमेचैवदशमैकादशेतथा ॥ सेचनंपरिधिश्चैवस्तरणंपूजनंक्रमादिति ॥ अत्रस्थंडिलाद्बहिरष्टमेंगुल अदितेनुमन्यस्वेत्यादिभिःपरिषेचनं ॥ तन्नव मेपरिधिः तद्दशमेपरिस्तरणं ॥ तदेकादशेपूजनमितिक्रमोज्ञेयः ॥ ७ ॥ अथपात्राणि ॥ कारिकायां ॥ आज्यस्थालीं स्रुवंचैवप्रणीतांप्रोक्षणींतथा ॥ शूर्पंशिलापुत्रकंचाथेध्माबर्हिषीतथा॥ स्फ्यंमेक्षणंचेतितेषांपरिमाणानिमेशृणु ॥ आज्य स्थालीप्रोक्षणीचप्रसृतिद्वयसम्मिते॥ प्रणीताद्विगुणात्वष्टागुणस्थालीचरोरपि ॥ दर्व्यादैर्घ्यप्रमाणंस्यादंगुलान्येकविंश तिः॥पंचैवतुबिलंतस्यादंडःस्यात्तुचतुर्दशः॥अरत्निमात्रीवाकार्याबाहुमात्रीत्यथापरे ॥ वैकंकत्यन्नहोमार्थापालाशीस्रु

